॥ अर्हम् ॥

श्रीचारित्रसिंहगणिविरचितम्



# गणधरसार्द्धशतकान्तर्गतप्रकरणम्

इदं पुस्तकं आचार्यमहाराजश्रीकृपाचन्द्रस्योपदेशेन मोहमयपुरनिवासि जव्हेरी चुन्नीलाल पन्नालालेन प्रकाशितम्

मोहमय्यां 'निर्णयसागर' मुद्रणालये कोलभाटवीथ्या २३ तमे गृहे रामचन्द्र येसु शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसवत् २४४२. विक्रमसवत् १९७२. ईसु १९१६.






जन्म-कलकत्ता, संवत् १९०५








मृत्यु-मुवई, संवत् १९५९

पाटणनिवासी स्वर्गस्थ वावु चुनीलालजी पन्नालालजी जव्हेरी.

# प्रस्तावना

एतत्परमपवित्रश्रीगणधरसार्धशतकनाम्नो महद्ग्रन्थस्य निर्मातारो जगद्गुरुपितामहाश्चतुरशीतिगच्छानां शृङ्गारहारजङ्गमयुगप्रधानभट्टारक-श्रीजिनदत्तसूरयः श्रीवर्द्धमानशासनस्य पञ्चमारके महत्प्रभावका जाताः ॥

देवाऽधिष्ठितसूरिमन्त्रस्य कोटित्रयम् जापकरणाद् द्विपञ्चाशद्वीराख्या व्यन्तरदेवताविशेषाः पुनः चतुःषष्टिमिता योगिन्यश्च व्यन्तरनिकाय-देवीविशेषा गुरुभक्तिवशादेनं निरंतरं सिषेविरे ॥

चत्वारो राजानश्च तैः प्रतिबोधिताः ॥

पुनस्त्रिंशत्सहस्राधिकैकलक्षमितेभ्यः १३०००० जनेभ्यः प्रतिबोधं दत्त्वा जैनधर्मे परायणाः श्रावकाः कृताः, श्रीसीमन्धरस्वामिनः कथनादम्बिकादेव्या "बृहद्दादे"ति जगति प्रसिद्धेभ्यः अनेकसिद्धिनिधानेभ्यः श्रीजिनदत्तसूरीश्वरेभ्यः जङ्गमयुगप्रधानमिति पदं दत्तम् ॥

श्रीजैनधर्मवृद्धिसिद्धये पञ्चपीरसाधकाः सुविहितमार्गप्रवर्त्तकाश्चाभवन्, संदेहदोलावल्याद्यनेकानां ग्रन्थानां कर्तॄणां सकलसंघस्योपरि-महदुपकारकारकाणां तेषाम् श्रीजिनदत्तसूरीणां जन्म विक्रमसम्वद्द्वात्रिंशदुत्तरैकादशशतेषु संजातम् ॥ ( ११३२ ॥ ) एकादशशतैकचत्वा-रिंशत्तमे ११४१ वर्षे दीक्षा श्रीधर्मदेवोपाध्यायसमीपे संगृहीता ॥ नाम तु सोमचन्द्र इति भणितम् तदनन्तरम् ॥

नवाङ्गीवृत्तिकारकाभयदेवसूरेः शिष्यस्य श्रीजिनवल्लभाचार्यस्य पदं चित्रकूटनगरे एकोनसप्तत्यधिकैकादशशतमिते ( ११६९ ) संवत्सरे वैशाखकृष्णपक्षषष्ठ्यां देवभद्राचार्यैरस्मै समर्पितम् ॥

द्वादशशतैकादशाधिके ( १२११ ) वर्षे आषाढशुक्लैकादश्याम् बृहस्पतिवासरे श्रीपूज्याः स्वर्गं गता इत्यादिशास्त्रे लिखितमस्ति ॥

अथ श्रीमहावीरस्वामिनष्षष्ठमकल्याणकविषये वदनीयं वदन्ति पश्यन्तु ॥

तथ्यातथ्यविचारोद्यानविहारविवर्जितान्, नानाशास्त्रविशेषविज्ञाननिधानमार्गदर्शकाग्रसरपुरुषविरहेण, महाभयानकविकटविवादवनाटव्यां निपतितान् जनान् वञ्चका इव वञ्चयन्तोऽत्र केचित् सुविहितपरम्परामजानन्तो जिनसिद्धान्तरहस्यपरिज्ञानविशेषकविशेषशून्यललाटपटिकाः, विशेषविज्ञानपीयूषपरिपूर्णगुरुमुखसुवर्णचषकया ज्ञानरसपानवञ्चितोष्ठपुटाः केवलं, परनिन्दायाः स्वस्योत्कर्षस्य च निरूपणेन, उत्तङ्गितोत्तङ्गमहापातकतरङ्गततितरलभ्रूभङ्गभरणभीषणरदनवदनदर्शनाः कथयन्ति यथा श्रीमन्महावीरस्वामिनः षष्ठं कल्याणकम् श्रीजिनवल्लभसूरिणैव प्ररूपितमित्यादिकमिति, तच्च तेषां प्रविलपनेन श्रीमहावीरस्वामिनः षष्ठस्य कल्याणकस्यागमेषु प्रतिपादनात् पूर्वाचार्याणां व्याख्यानावलोकनाच्च हेतोः शोचनीयदशामनुभवता विशीर्यते ॥

ननु षष्ठं कल्याणकम् कुत्रागमे निरूपितमस्तीति स्वाज्ञानागदव्यथानिवृत्तये कीर्तयति स्म चेत् तदा मत्सरं परित्यज्य स्वहितःशृणु। श्रीतपागच्छीयकुलमण्डनप्रभृत्यनेकाचार्यैः षष्ठं कल्याणकमहरहः कथितम् तत्प्रमाणं तत्कृतेष्वपि ग्रन्थेषु, कल्पावचूरिकल्पसूत्रटव्वाकल्पसूत्रबालापबोधादिषु प्रतिसमयसुपलभ्यते तत्र कल्पावचूरेः पाठो यथा ।

**यौ कालसमयौ भगवता ऋषभदेवस्वामिना अन्यैश्च तीर्थंकरैः श्रीवर्द्धमानस्य षण्णां च्वानादीनां कल्याणकानाम् हेतुत्वेन कथितौ तावेति ब्रूमः पञ्च हत्थुतरे होत्थेति हस्तादुत्तरस्यां दिशि वर्तमानत्वात् हस्तोत्तरा हस्त उत्तरो यासां वा ता हस्तोत्तरा उत्तराफाल्गुन्यः बहुवचनं बहुकल्याणकापेक्षम् पञ्चसु च्यवन १ गर्भापहार २ जन्म २ दीक्षा ४ ज्ञान ५ कल्याणकेषु हस्तोत्तरा यस्य सः तथा निर्वाणस्य स्वातौ जातत्वादिति॥**

अथ श्रीजिनदत्तसूरिपट्टे मणिमंडितभालस्थलः महोपकारी श्रीजिनचन्द्रसूरिश्चाभूत् ॥

एतेषाम् जन्मैकनवत्यधिकैकादशशते वर्षे ( ११९१ ) संजातम् ॥ द्वादशशतैकादशाधिके ( १२११ ) संवत्सरे वैशाखसितपञ्चम्याम् श्रीजिनदत्तसूरिभिस्तस्मै स्वहस्तेन आचार्यपदं प्रदत्तं ॥ त्रयोविंशत्यधिके द्वादशशतमिते वर्षे ( १२२३ ) स्वर्गं गताः ॥

तत्पट्टे श्रीजिनपतिसूरिरभवत् ॥ तेन संघपट्टकवृत्तिप्रमुखा अनेके ग्रन्थाः कृताः, तस्य शिष्येण सुमतिगणिना गणधरसार्धशतकस्य वृहद्वृत्तिर्द्वादशसहस्रप्रमाणा कृता ॥

तस्याश्चातिविस्तरत्वात्, अल्पसमयेन जनैरवलोकितुमशक्यत्वात्, अन्यव्यवसायवाहुल्येन इदानीतनजनानां, चिरकालनिरन्तर-प्रवृत्तेश्च संदिग्धत्वात् तदवधेयपीयूषरसपानेऽनेकजनानां तृषावृद्धिं संभाव्य, सकललोकोपकाराय, जिनदर्शनविचारप्रचारविवृद्धये च परमकारुणिकेन विद्वज्जनमनोमानसहंसेन श्रीसुमतिगणिशिष्येण, चारित्रसिंहगणिना, एतस्या अन्तर्गतं सारं सारं प्रकरणादिकमुद्धृत्य विरचितमिदं प्रकरणम् ॥ अस्मिंश्च संदर्भे विशेषतः श्रीवर्धमानजिनेश्वरजिनचन्द्रश्रीमदभयदेवजिनवल्लभजिनदत्तसूर्याद्यनेकाचार्याणां चरित्रं संक्षेपतो दर्शितमस्ति,तथा श्रीदुर्लभराजसभायां दुर्लभराजस्य, सर्वेषां च विदुषां समक्षं चैत्यवासिनां शास्त्रार्थेन मुखमालिन्यं विधाय श्रीजिनेश्वरसूरीणां खरतरविरुदसंप्राप्तिश्च । प्रकरणवशेनान्यदपि लिखितमिति । अस्यापि ग्रन्थस्यावलोकने सहस्रशो जनानामुत्कण्ठां निरीक्ष्य लिखितपुस्तकानां संख्याया अल्पत्वेन सर्वेषां तदवलोकनं दुर्लभं संभाव्य, इदानीं श्रीमदाचार्यमहाराजकृपाचन्द्रस्याज्ञानुसारेण देवगुरूपासक जव्हेरी श्रीचुन्नीलाल पन्नालाल श्रेष्ठिणा एतस्य संशोधनादिकं तथा मूलगाथानां छायाञ्च कारयित्वा सकलसंघस्योपकाराय यन्त्रयित्वा प्रकाशितमिति ॥

अन्यानि प्रमाणानि तु तत्तद्ग्रन्थेषु स्मरणीयानि विस्तरभयान्नास्माभिरुल्लिखितानि ॥

अस्यच शोधनसमये, ग्रन्थद्वयमेव पार्श्वे आसीत् अतोऽत्र यो मात्रापदवर्णार्थपाठादीनां संस्कारो न दृश्यते यच्च गाथानुयायिछायासु वृत्तस्य मात्राभंगभयेन चैवहवादीनामाधिक्यं नूनत्वं चास्ति तद्दयालुभिः कृपया क्षन्तव्यम् ॥ नमन्तु गुणानुरागिणो भवन्तः सभ्याः पूज्यान्

युक्तायुक्तविचारचारुकुशलःकोऽन्योऽस्ति लोके जनः। शास्त्राभ्यासपयोधिरत्नधरणे शिष्याः सुशिष्याः सदा॥
न्याये वर्त्मनि योजिताश्च जनताः प्रासश्च नाके यशः। सोऽयं श्रीकरुणाशशाङ्कसुकविर्दद्याच्छिवं सर्वदा॥१

ज्ञानं यस्य सुदीर्घवस्तुविषयं जीवेषु नित्यं दया । सत्यं शौचदमाक्षमामधुरवागेते गुणा जन्मजाः ॥
मान्यो मानधनः प्रमाणितवुधो दक्षः शरण्यः सुधीः । ते धन्याः सुजनाश्च ये कविकृपाचन्द्रस्य पादानुगाः ॥ २॥
सद्बोधदाता न च दोषज्ञाता दोषाकरो यो न गुणाकरश्च। तमानुदो ध्वंसतमस्समूहरिन्दुकृपाचंद्ररिवास्तुशान्त्यै३

गृहे गृहे सन्ति गृहेचराणां प्रबोधदाता बहवोऽपि सन्तः ।
स कोऽपि बोधी क्वचिदेक एव व्रजन्ति यं ज्ञानधरा मुनीन्द्राः ॥ ४ ॥

अस्य संशोधकः पण्डितजगदीश्वरानन्दः प्रणमति । शुभमस्तु ।

---

॥ श्रीः ॥

श्रीचारित्रसिंहगणिविरचितम् ।

# श्रीगणधरसार्द्धशतकान्तर्गतप्रकरणम् ।



## ॥ श्रीपार्श्वजिनंप्रणम्य ॥

श्रीमद्योगीन्द्रयुगप्रधान-श्रीजिनदत्तसूरिकृतस्य, श्रीगणधरसार्द्धशतकप्रकरणस्य श्रीजिनपतिसूरिशिष्यपण्डितसुमतिगणिदृब्धाया बृहद्वृत्त्याः अत्र चाऽयं वाचनाचार्यपूर्णदेवगणिमुख्यवृद्धसम्प्रदाय अम्भोहरदेशे जिनचन्द्राचार्यो देवगृहनिवासी चतुरशीतिदेवग्रहनायक आसीत्, तस्य च व्याकरणतर्कच्छन्दोऽलङ्कारविशारदः, शारदचन्द्रचन्द्रिकाऽवदातनिर्म्मलचेताः, वर्द्धमाननामा शिष्योऽभूत्, तस्य च प्रवचनसारादिग्रन्थं वाचयतश्चतुरशीतिराशातना आयातास्ताश्चेमाः, तथाहि—

“खेलं १ केलि २कादि ८४ आसायणाउ भवभमणकारणाइ अविभाविऊं ।
जइणो मलिणत्ति न जिणमंदिरंमि निवसंतिइ असमओ” ॥ १ ॥

एताश्च परिभावयतस्तस्येयं मनसि भावना समजनि, यद्येताः कथंचिद्रक्ष्यंते तदैव भवकान्तारनिस्तारः स्यादन्यथाऽगाधभवाम्भोधिमध्यनिपतितैरस्माभिरनन्तशो जन्मजरामरणदारिद्र्यदौर्भाग्यरोगशोकादिसंतापपात्रमेवात्मात्मदौरात्म्यादात्मनैव कृतो भविष्यति । यत उक्तं—‘आसायणमिच्छत्तं०’ अयं च स्वकीयशुभाध्यवसायस्तेन वर्द्धमानाभिधानसाधुना स्वगुरवे निवेदितस्ततस्तेन गुरुकर्मणा जिनचन्द्राख्येन तद्गुरुणा चिन्तितमहो न सुंदरोऽस्याऽयमाशयस्तदेनमाचार्यपदे संस्थाप्य देवगृहारामादिप्रतिबंधनियंत्रितं करोमीति तथैव चाकारि तेन, तथापि तस्य पुण्यात्मनो मनो न रमते चैत्यगृहावस्थितौ, युक्तं चैतत् । यतः—

दुर्गन्धपंककलिते शवतापरीतदुस्त्रोटिकोटिकबकोदकुटुम्बकीर्णे ।
त्यक्ते सुपत्रिभिरलं वत शुभ्रपक्षाः, किं कुत्सिते सरसि पादमपि क्षिपन्ति ॥ १ ॥

ततो वत्सैतत्सर्वं देवगृहमठारामवाटिकादिकं त्वदायत्तं स्वेच्छया विलस, माऽस्मान्त्वदेकप्रमाणान्मुञ्च इत्यादिकोमलालापपुरस्सरं निवार्यमाणोऽपि कृतः ईप्सितार्थस्थिरनिश्चयमनाः । ‘पयश्च निम्नाभिमुखं प्रतिपत्ते’ दितिन्यायेन यथा तथा प्रभोः कस्यापि सुविहितगुरोरङ्गीकारेण मया स्वहितमनुष्ठातव्यमिति विहितनिशितप्रतिबंधः स्वाचार्यानुज्ञातः कतिपययतिपरिवृतः ढिल्लीवादलीप्रमुखस्थानेषु समाययौ, तस्मिंश्च समये श्रीउद्योतनाभिधानसूरयः

सुविहिताः पूर्वमेव तत्पुण्यप्रेरिता इव विहृता अभवन्, ततस्तच्चरणकमलमूले शुद्धमार्गतत्त्वं निश्चित्य ते श्रीवर्द्धमानसूरयः सुनिश्चितोपचितहितंसपत्तिमुपसंपत्तिमाददिरे, तदनन्तरं श्रीवर्द्धमानसूरीणामियं चिंता जाता, यदुतास्य सूरिमंत्रस्य कोऽधिष्ठाता तत्परिज्ञानायोपवासत्रयं चक्रुः, यावत्तृतीयोपवासे धरणेन्द्रः समागतः उक्तंच तेन, यथा सूरिमंत्रस्याऽहमधिष्ठायकः, निवेदितं सर्वसूरिमन्त्रपदानां प्रत्येकं फलं, ततो जातः स्फूर्त्तिमानाचार्यमंत्रस्तेन सस्फूर्त्तयः सपरिवारा वर्द्धमानसूरयो जज्ञिरे, अस्मिन्प्रस्तावे विज्ञप्तं पण्डितजिनेश्वरगणिना, भगवन्? ज्ञातस्य जिनमतस्य किं स्याद्विशिष्टं फलं, यदि क्वापि गत्वा सन्मार्गप्रकाशो न विधीयते, श्रूयते च विस्तीर्णो गुर्जरदेशः किंतु प्रचुरचैत्यवास्याचार्यव्याप्तश्च, अतो यदि तत्र गम्यते इति श्रेयः, ततः श्रीवर्द्धमानाचार्यैरुक्तं, युक्तमुक्तं भवता, परं शकुननिमित्तादिकं परिभाव्यते, परिभावितं जातं च शुभशकुनादिकं, ततो भामहमहत्सार्थसहिता आत्मनाष्टादशाश्चलिताः सूरयः क्रमेण च पल्लीं प्राप्ताः बहिर्भूमिगतानां तत्र पंडितजिनेश्वरगणिसमन्वितानां श्रीवर्द्धमानसूरीणां मिलितः सोमध्वजो नाम जटाधरः, जातस्तेनसहेष्टगोष्ठिस्ततो गुणं दृष्ट्वा चक्रे प्रश्नोत्तरं सूरिभिः । यथा—

"का दौर्गत्यविनाशिनी हरिविरिंच्युग्रप्रवाची च को, वर्णः को व्यपनीयते च पथिकैरत्यादरेण श्रमः ।
चन्द्रः पृच्छति मंदिरेषु मरुतां शोभाविधायी च को, दाक्षिण्येन नयेन विश्वविदितः को भूरि विभ्राजते" ॥१॥

अत्रोत्तरं "सोमध्वजः" द्विर्व्यस्तसमस्तः सा ऊम् अध्वजः सोमध्वजः ततस्तुष्टोऽसौ जटाधरः समुत्पन्नः श्वेताम्बरदर्शनेऽस्य बहुमानः कृताप्रासुकान्नदानं लोकसमक्षं गुणस्तुत्यादिका प्रतिपत्तिस्तेन ततस्तेनैव भामहसंघातेन सह प्रस्थिताः प्राप्ताश्च क्रमेणाणहिल्लपत्तने उत्तीर्णा मण्डपिकायां तस्यां च प्राकारमात्रेऽपि नास्त्याश्रयः सुविहित साधुभक्तः श्रावकोऽपि कोऽपि

नास्ति, येनस्थानादिकं याच्यते, यावत्तत्रोपविष्टानामिव घर्मो निकटीभूतः ततोऽभिहितं पण्डितजिनेश्वरेण यथा भगवन्नेवमुपविष्टानां न किमपि कार्यं सिद्ध्यति, श्रीवर्द्धमानसूरयः प्राहुः तर्हि सुशिष्य किं क्रियते जिनेश्वरपण्डितः ? यदि यूयं वदथ तदोच्चैर्गृहं दृश्यते तत्र व्रजामि, वर्द्धमानसूरयो व्रज ततः सुगुरुचरणाम्भोजान्यभिवंद्य गतस्तत्र, तच्चोच्चैर्गृहं श्रीदुर्लभराजमहीवल्लभसत्कपुरोहित संबंधि वर्त्तते, .तदानीं च पुरोहितः स्वशरीराभ्यङ्गं कारयन् तिष्ठति, ततः पण्डितजिनेश्वरेण तस्याग्रतः स्थित्वा पठितं यथा—*

"सर्गस्थितिक्षयकृतो, विशेषवृषसंस्थिताः ॥
श्रिये वः संतु विप्रेन्द्रब्रह्मश्रीधरशंकराः" ॥ १ ॥

इत्याशीर्वादप्रसन्नमानसः स राजपुरोधाश्चिंतयत्यहो विचक्षणोऽयं व्रती कश्चिद् ? अत्रान्तरे मन्दिरान्तर्वर्त्तिविविक्तशालाप्रदेशे ॐ ऋषभं पवित्रं पुरुहूतमध्वरं यज्ञं महेशमित्यादि वेदवाक्यपरावर्त्तनमन्यथा कुर्वतश्छात्रान् श्रुत्वोक्तं पंडितजिनेश्वरेण, मेत्थं वेदपदान्युच्चरत, किंतर्हीत्थमित्येतदाकर्ण्य विस्मयमानमानसः पुरोधाः कोमलगिरा पप्रच्छ, नन्वनधीतं नहि कश्चिन्नामशुद्धमशुद्धं वेदमिति परिच्छिनत्ति. ततो वैपरीत्येन वेदवाक्यपरावर्त्तनं युष्माभिर्वेदपाठानधिकारिभिः शूद्रैः कथमवागामि, जिनेश्वरपण्डितेनोक्तं, महाभागशेखर द्विजेश्वर यथा आत्थ त्वम् तथैवैतन्नहि शूद्राणां वेदपाठाधिकारः, किन्तु न हि वयं शूद्राः किंतर्हि वेदचतुष्टयाध्यायिनो विप्रजातिनस्तथा—

"तपसा तापसो ज्ञेयः ब्रह्मचर्येण ब्राह्मणः ॥
पापानि परिहरंश्चैव, परिव्राजोऽभिधीयते" ॥ १ ॥

इति पूर्वर्षिप्रतिपादितब्रह्मचरणलक्षणादर्थतश्च ब्राह्मण एव वयं, पुरोहितः सानन्दं भो यतिपुंगवाः ? कुतो देशाद्यूयमत्रागताः, पण्डितजिनेश्वरगणिः । दिल्लिकापुरीतिलकांकितात्, पुरोधाः किं तद् धन्यं धरणीतलमेतदस्मिन्पत्तने यदलंचक्रे चक्रादिलक्षणोपलक्षितयुष्मादृशमुनिराजहंसचरणन्यासैः, पंडितजिनेश्वरः विशालतपनातपशालायां वयं स्थिताः स पुरोहितः । किमिति तत्रावस्थिताः, पण्डितजिनेश्वरः । पुरोहितमिश्राः शेपस्थानानां विरोधिभिरवष्टब्धत्वात्, पुरोहितः भवादृशामपि शान्तात्मनामकृतागसां केचिद्विपक्षाः संति, पण्डितजिनेश्वरः । द्विजोत्तम ?

मुनेरपि वनस्थस्य, स्वानि कर्माणि कुर्वतः ॥
उत्पद्यंते त्रयः पक्षा, मित्रोदासीनशत्रवः ॥ १ ॥

पुरोहितः । अहह चंदनशीतलानामपि युष्मादृशां पापाः केचिदप्रियकारिण इति क्षणं विपद्य, पुनरथ के पुनस्ते दुर्विधेया मया ज्ञेयाः, पण्डितजिनेश्वरः महात्मन्नस्तु कल्याणमेषां किं नस्तेषां चर्चाकदर्थनेन, पुरोहितः स्वगतं अहो

"त एते सुकृतात्मानः, परदोषपराङ्मुखाः ॥
परोपतापनिर्मुक्ताः, कीर्त्यंते यत्र साधवः ॥ १ ॥"

ततः कथमेते महात्मानः स्वविधानां नामोत्कीर्त्तनं करिष्यंति, किंच ममापि तेषां दुरात्मनां नामश्रवणमश्रेयस्करं तद्भव-

त्वेवमन्यत्पृच्छामीति, प्रकाशं, एतावंतएव यूयमागताः स्थ, किमुताऽन्येऽपि केचिन्मुनयः संति, पंडितजिनेश्वरः, । येषां वयं शिष्यलेशगास्त आसते स्वमनीषाविशेषविक्षिप्तसुरगुरवस्त्रिजगद्गुरवोऽस्मद्गुरवः परित्यक्तपरिग्रहग्रहिणीधनधान्यस्वजनस्नेहसंबंधभूरयः सुगृहीतनामधेयाः श्रीवर्द्धमानसूरयः, पुरोधाः । सविसयं सर्वेऽपि कियंतो भवंतः, पण्डितजिनेश्वरः । अष्टादश पापस्थानविरता अष्टादशसंख्या वयं वर्त्तामहे, पुरोहितः स्वागतं, अहो

याद्दशास्त्यक्तदाराः सदाचारा मुक्तभोगा जितेन्द्रियाः ॥
गुरवो यतयो नित्यं, सर्वजीवाऽभयप्रदाः ॥ १ ॥

इति दमाध्यायप्रतिपादिताः ॥

सद्गुरवस्ताद्दशा एते महात्मानस्तदेतान् स्वगृह एवानाय्य निर्धूतरजसैतच्चरणपूतरजसा पुनामि, स्वगृहाङ्गणं, भवामि, सततमेतेषां प्रत्यक्षपुण्यपुंजानामीक्षणेन क्षणं साफल्यभाग् भवतु, एवं पुनः प्रकाशं भोमहासत्वाः ! चतुःशालविशालमदीयगृहे एकस्मिन्द्वारे प्रविश्यैकस्यां शालायां तिरस्करिणीं दत्वा तिष्ठत सर्वेऽपि यूयं सुखेन, भिक्षावेलायां मदीयमानुषेऽग्रीकृते ब्राह्मणगृहेषु भिक्षायामपि न किमपि क्षुण्णं भवतां भविष्यति, ततः पंडितजिनेश्वरगणिः, केऽन्ये भवद्भ्योप्यौचितीचारुचेतसः इति भणन् ।

"प्रेक्षते स्म नच स्नेहं, न पात्रं न दशान्तरं ॥
सदा लोकहितासक्ता, रत्नदीपा इवोत्तमाः ॥ १ ॥"

इति च पठन् गतः स्वगुरुसमीपे निवेदितः समस्तोऽपि वृत्तान्तः समीचीनमेतदिति विचिंत्यापि तथैव सर्वं कुर्वन्त्येवं च तत्र स्थितानां स्वधर्मकर्मनिरतानां पत्तनमध्ये समुच्छलिता वार्त्ता यदुत वसतिपाला यतयः समायाताः संति, श्रुताश्च चैत्यगृहनिवासिभिः साध्वाभासैस्ततस्तैर्मिलित्वा आलोचितं यदुताहो न शोभन मेतद्यदेते वसतिपाला अत्राजग्मुर्यतो एते सुविहिताः सदैवागमोक्तक्रियाकारिणश्चैत्यवासपरिहारिणः, वयं पुनः स्वच्छंदचारिणः सिद्धान्तोत्तीर्णभवपातकारिदेवद्रव्यापहारिणः सदैवैकत्रवासिनः कामोन्मादनतांबूलाश्रांतास्वादनसचित्रविचित्रान्दोलनपल्यंकगंडोपधानगल्लमसूरिकादिशृंगारचेष्टाविशेषप्रकटनेन नटविटवन्महाविलासिन इत्याद्युल्लपनपूर्वकमात्मानं वक्रवृत्त्या परमधार्म्मिकत्वेन जनमध्ये प्रतिष्ठापयिष्यंति, अस्मांश्च सर्वत्रानाचारिण इति कृत्वा, व्यवस्थापयिष्यंति, ततो यावदेष कोमल एव व्याधिस्तावच्चोच्छिद्यते इत्यात्मशंकितैस्तैरालोच्य चिंतित उपायो यथा वयं तावदधिकारितनयानध्यापयामस्ते चासत्कथितकारिण एव ततस्तानावर्ज्य तन्मुखेन दूषणमेषामारोप्यैतानुच्छेदयामस्ततस्तैराहूता अधिकारिपुत्राः स्वच्छात्राः, प्रलोभिताः खर्जूरद्राक्षावर्षोपलादिप्रदानेन भणिताश्च, युष्माभिर्लोकमध्ये एवं भणनीयं यदुतैते केचन परदेशात् श्वेताम्बररूपेण श्रीदुर्लभराजराज्यछिद्रान्वेषिणश्चराः समागताः संति, कृतं च तत्तथैव तैः, ततः सा वार्तोदकांतस्तैलबिंदुरिव प्रसृता पत्तनमध्ये, प्रसरंती च राजसभायामपि प्राप्ता ततो दुर्लभराजमहीभुजाऽभिहितं, अहो यद्येवंविधाः क्षुद्राः कापटिकाः श्वेतपटाः केऽप्याजग्मुस्ततस्तेषामाश्रयः केन दत्तस्तत्रस्थेन च केनाप्युक्तं देव तत्रैव गुरुणा ते स्वगृहे धारिता-

स्ततो दुर्लभराजेनोक्तं आकारय तमाकारितः पुरोहितो भणितश्च, भोः शांतिकर्तः श्वेताम्बररूपधारिणो ये हेरिका अत्रागतास्तेषां किमिति त्वया स्थानमदायि, पुरोहितेनोक्तं, केनेदं दूपणमुद्भावितं यद्धेरिकास्ते किंबहुना यद्येषां दूपणमस्ति तदा पारुत्थलक्षेणैषा कर्प्पटिका प्रक्षिप्ता, पुनर्यद्येषां मद्गृहवर्त्तिनां मुनीनां मध्ये दूपणगंधोऽप्यस्ति तदोत्पाटयंत्वेतां तद्दूषणवक्तार इत्युक्त्वा स्थितः पुरोहितस्ततः संति तत्रामात्यश्रेष्ठिप्रमुखा मभूतास्तद्भक्ताः प्रधानपुरुषाः, परं न कश्चिदुत्पाटयति कर्प्पटिकां को नाम परकीयां रुष्टो गृह्णाति ततो भणितं राज्ञःपुरं पुरोहितेन, देव ।

न विना परवादेन, रमते दुर्ज्जनो जनः ॥
श्वेव सर्वरसान् भुक्त्वा विनाऽमेध्यं न तृप्यति ॥ १ ॥
महतां यदेव मूर्धनि तदेव नीचाश्रयाय मन्यंते ॥
लिंगं प्रणमंति बुधाः, काकः पुनरासनीकुरुते ॥ २ ॥

ततो देव ये केचन मद्गृहे वर्त्तते मुनयस्ते मूर्त्तिमंतो धर्मपिंडाः क्षांतिदांतिसरलत्वमृदुत्वतपःशीलसत्यशौचनिःपरिग्रहत्वप्रमुखगुणरत्नकरंडाः श्वेतवाससोपि न पिपीलिकाया अप्युपतापमिच्छन्ति कुतः पुनरेवंविधमिह परलोकविरुद्धमकार्यं ते करिष्यंत्यतो न तेषां दूपणलेशोऽप्यस्ति, परं केषांचिद्दुरात्मनां विलसितमेतदिति राज्ञोऽपि चित्ते तत् प्रतिभातं, आह च हे पुरोहित त्वम् यदात्थ ? तथैवैतत्संभाव्यत इति तत एतां वार्त्तामाकर्ण्य सर्वैरपि सूराचार्यप्रभृतिभिः परिभावितं यदेतान् परदेशागतान् वादे निर्जित्य निस्सारयिष्यामः ततस्तैराहूयाऽभिहितः पुरोहितो यद्युष्मद्गृहावस्थायियतिभिःसह वयं विचारं

कर्त्तुकामा आसहे तेषां पुरस्तेनोक्तं तान्पृष्ट्वा यत्स्वरूपं तद्भणिष्यामि, ततः स्वसदने गत्वा भणितास्तेन ते भगवन्तो, यथा विपक्षाः श्रीपूज्यैःसह विचारं कर्तुं समीहन्ते तैरुक्तं किमत्रायुक्तमेतदर्थमेव वयमागताः परमत्रार्थे त्वया न मनागपि भेतव्यं किंत्वियर्थं ते युष्माभिर्वक्तव्या यदि यूयं तैः सह विवदितुकामास्तदा ते श्रीदुर्लभराजप्रत्यक्षं यत्र भणिष्यथ, तत्र विचारं करिष्यंति ते हि सद्धर्ममार्गप्रकटनार्थं विसंकटग्रामनगरादिष्वटाट्यमानाः सर्वत्र विचरंतीति ततो राजसमक्षं ते विचारकरणेऽतीव सोत्कंठास्तिष्ठंतीति, ततस्तेषां पुरस्तथा पुरोधसोदिते तैः समस्तैरात्मपांडित्यगर्वितैश्चिंतितं सर्वेऽप्यधिकारिणस्तावदस्मद्वशवर्त्तिनस्तेभ्यो वैदेशिकेभ्यः कीदृगस्माकं भयमिति, भणितं च भवतु राजसमक्षं विचारः, ततः प्रमाणितं तद्वचः पुरोहितेन तैरप्यमुकस्मिन् वासरे पंचासरीयबृहद्देवगृहे विचारो भविष्यतीति निश्चित्य निवेदितं सर्वेषां पुरः, पुरोहितेनाप्येकांते भणितो नृपो यथा देव आगंतुकमुनिभिः सह स्थानस्थिता विचारं विधातुकामास्तिष्ठंति, स च विचारो न्यायवादी राजसमक्षं क्रियमाणः शोभते ततो युक्तविचारदक्षैस्तत्र विचारप्रस्तावे भवद्भिः प्रसद्य प्रत्यक्षैर्भवितव्यं, राज्ञोक्तं किमयुक्तं कर्त्तव्यमेवैतदस्माभिः ततोऽनिष्टं किंतदिति, तस्मिन्नेव देवगृहे सिंहासनगद्दिकाचक्कलकादिप्रचुरतरमहत्तरासनाटोपेन पूर्वदेशदक्षिणदेशाद्युद्भवचिविकच्चिकानर्मिकापट्टहीरजादरिगोज्जिकानि रत्तकीटश्वेतपीटराढिकापकल्लपट्टादिश्वेतश्वेततराच्छाच्छतरप्रच्छादनपटीकटीतटीपट्टकप्रलंबलंबमानदशादंडोद्दंडस्पष्टनष्टाभिधरजोहरणनामधेयपदार्थकांडप्रमाणातिक्रांतसंदशप्रांतमुखवस्त्रिकोज्वलमहामूल्यसूक्ष्म लोचिका मेचककीचकोद्दालचकचकायमाननिर्मानदंडकादिवेषाडंबरेण बहलतांबूलरसाहितदशनरंगलिंगालिंगिनीतूलिकापट्टांशुकाच्छादनपट्टकालितललित सुखासनश्रीकरिणिकामात्यश्रेष्ठिप्रमुखधनाढ्यश्राद्धनानाभक्तिविशेषवेषभूषणभूषाविष्कृतस्फार-

तारशृंगारश्राविकाविहितस्वकीयस्वकीयाचार्यगुणवर्णनानिबद्धधवलमंगलगीतोच्चारादिबृहत्स्फुटाटोपेनसूराचार्यप्रभृतिचतुरशीतिसंख्यचैत्यवासाचार्याः सूर्योदय एवागत्य स्वहस्तन्यस्तवादस्थलपुस्तिकाः समुपविविशुः, राजप्रधानपुरुषैराकारितः श्रीदुर्लभमहाराजोऽपि महता भटचटकरेणागत्योपविष्टस्तत्र, ततोऽभिहितं राज्ञा पुरोहित क्षिप्रमाह्वानय तान्स्वसम्मतान्देशान्तरायातानार्यान् ततस्त्वरितपदं गत्वा श्रीवर्द्धमानसूरीनेवं विज्ञपयति, भगवन् ? पंचासरीयदेवगृहे सर्वेऽप्याचार्याः सपरिवारा उपविष्टाः श्रीदुर्लभराजमहीवल्लभश्च, सर्वेऽप्याचार्याः पूजितास्तांबूलदानेन भूभुजा, इदानीं तु युष्माकमागमनमवलोक्यते एतत्पुरोहितमुखादाकर्ण्य श्रीवर्द्धमानसूरयः श्रीसुधर्मस्वामीजंबूस्वामीप्रभृतिचतुर्दशपूर्वधरान् युगप्रधानानपरानपि सूरीन्विन्यस्य हृदयपुंडरीके, पंडितजिनेश्वरप्रमुखकतिपयगीतार्थसुसाधुभिःसह प्रचलिताः पंचासरीयचैत्याभिमुखं, कन्यागोशंखभेरीदधिफलपुष्पमालाद्यालोक्य मांगलिक्यरूपानुरूपसुशकुनदर्शनसंभाविताभिलषितसिद्धयः, प्राप्ताश्च तत्रोपविष्टाः पंडितजिनेश्वरदत्तनिषद्यायां, श्रीदुर्लभराजदर्शितस्थाने पण्डितजिनेश्वरोऽपि गुरुणाऽनुज्ञातोऽवनतगात्रः स्वगुरुपदांत एवोपविवेश, अत्रान्तरे नृपतिस्तांबूलं दातुं प्रवृत्तस्ततः सकलसभासमक्षमाचचक्षे भगवद्भिः श्रीवर्द्धमानाचार्यैः, महाराज ? असदागमे मुनीनां तांबूलभक्षणं स्नानपुष्पमालागंधनखकेशदशनादिसंस्कारादिकं निषिद्धमस्ति, ततः "संजमे सुट्ठियप्पाणं० लहुभूयविहारिणं० १०" इत्यागमं पठित्वा यद्राजाग्रतो व्याख्यानार्हं तद्व्याख्यातं श्रीमदाचार्यैः, राजा तांबूलभक्षणे को दोषः, आचार्याः कामरागवर्द्धनं तांबूलमिति जगद्विदितमेतत्तथा च पठ्यते लोके यथा—

"तांबूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं, वातघ्नं कफनाशनं कृमिहरं दौर्गंध्यनिर्नाशनं ॥
वक्रस्याभरणं विशुद्धिकरणं कामाग्निसंदीपनं, तांबूलस्य सखे त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभाः ॥ १ ॥

अतो ब्रह्मचारिणां तांबूलभक्षणं रागवृद्धिहेतुत्वादत्यंतं दुष्टमेव स्मृतावप्युक्तं—

ब्रह्मचारियतीनां च, विधवानां च योषितां ॥
तांबूलभक्षणं विप्र, गोमांसान्न विशिष्यते ॥ १ ॥
स्नानमुद्वर्त्तनाभ्यंगं, नखकेशादिसंस्क्रियां ॥
धूपं माल्यं च गंधं च त्यजंति ब्रह्मचारिणः ॥ २ ॥

एतच्छ्रुत्वा विवेकप्रवेकलोकस्य जातो हृदये प्रमोदो, गुरुषु बहुमानश्च श्रीवर्द्धमानाचार्यैरुक्तमाचार्यैः सह विचारे प्रक्रांतेऽस्मच्छिष्य एष पण्डितजिनेश्वरो यदुत्तरप्रत्युक्तं प्रदास्यति तदस्माकं प्रमाणं, सर्वैरपि भणितमेवमस्तु, ततश्चतुरशीत्याचार्यवर्यगरिष्ठेन सूराचार्यचैत्यवासिना जल्पितं, यथा शृण्वंतु भोः सर्वेऽपि क्षितिपतिमंत्रिप्रभृतयो लोका यदस्माभिरुच्यते, मंत्र्यादयस्तत्पाक्षिका वदंति, वदंतु भवंतस्तिष्ठामो वयमेते श्रवणोर्ध्वीकृतश्रवणाः राजा पुनस्तदानीं समस्तानपि तांश्चैत्यवास्याचार्यसाध्वाभासांश्चकचकायमानोत्थितसमीकृतनताविरलशिरःकुंतलांस्तांबूलरसरंजितौष्ठपुटरदनान्, बहुलकौतूहलावलोकनाक्षिप्तमृगेषणान्निरीचिक्षिषेत ततः क्षिप्तस्फारेक्षणनष्टपुष्पाङ्गान् घृष्टालक्तकरसरक्तपादनखांस्तीक्ष्णीकृतनखशुक्तिकान् सुरभिचंपकतैलाभ्यक्तगात्रोच्छलद्बहलपरिमलान् पटवासधूपितपटावगुंठितान् वीक्ष्य चिंतयांचकार, अहो सविलासचेष्टकायाः खल्वमी

विटप्राया महामूढत्वेन व्यतिरिच्यंते नेष्टकायाः, पश्यताऽमी पुनर्महानुभावाः स्वभावानीचा अपि नीचासनोपविष्टाः समूलमूर्धजोन्मूलनावलोक्यमाना समानसमारचिताविततखरपरुषधूसरोत्तमाङ्गकेशाः मलपटलाविशदांशुकरदनदेहपादविपादिकाः दर्शनमात्रेणैवोपलभ्यमानशांततालिंगिततपोनिष्ठमूर्त्तयो निश्चितं ये केचन गुणालङ्कृतगात्रास्त्रिजगन्महनीयमहाशीलव्रतपात्राण्युच्यन्ते, त एते महाव्रतिन इत्येवं विमृशति क्षितीशेऽत्रान्तरे समुपन्यस्तं सूराचार्येण, यथा भोः२ वसतिपालाः सावधानमनोभिः श्रूयतां युष्माभिः, जिनभवननिवास एवेदानींतनमुनीनां समुचितस्तत्रैव निरपवादब्रह्मव्रतस्य संभवाद्यतीनां च तदेव गवेष्यते न च शेषव्रतानामिव तत्रापि सापवादत्वमस्तीति वाच्यं, सिद्धान्तेऽस्य सर्वव्रतेषु निरपवादत्वेनैव प्रतिपादनात्तथा चोक्तं—
"नवि किंचि अणुन्नायं, पडिसिद्धं वा विजिणवरिंदेहिं ए १" वसतिवासे तु युवतिजनमनोहारिशब्दश्रवणादेर्न ब्रह्मव्रतं समग्रैर्वोढुं पार्यते, उत्कलिकादिप्रादुर्भावात्तथाहि–नितंबिनीनां कोकिलाकलकूजितं गीतादिरवमधरितरतिसौंदर्यं च रूपमुपलभ्य भुक्तभोगानां यतीनां पूर्वानुभूतनिधुवनविलसितप्रतिसंधानादयोऽभुक्तभोगानां च तत्कुतूहलादयः प्रादुर्भवेयुर्यतीनां च सततं कर्णपीयूपवर्षिविशदगंभीरमधुरस्वाध्यायध्वानं निशम्य केषांचित्तु शरीरागण्यलावण्यश्रियं निर्व्वर्ण्य प्रोषितपतिकादीनां तरुणीनां रिरंसादयः प्रादुष्युः, एवं चान्योन्यं निरंतररूपावलोकनगीतश्रवणादिभिर्दुर्म्मथमन्मथदौस्थ्याच्चारित्रमोपादयोऽनेके दोषाः पुष्येयुः यथोक्तं–

"थीवज्जिअं विआणह इत्थीणं जत्थठाणं रुवाणि सद्दायनसुचंतीता पियतेसिं न पिच्छंति" ॥ १ ॥
"बंभव्वयस्स अगुत्ती" लज्जानासोयवीइवुड्ढीअ ॥ साहुतवो धणनासो, निवारणातित्थ परिहाणी ॥ २ ॥

लौकिका अप्याहुः,—

"श्रृणु हृदयरहस्यं यत्प्रशस्यं मुनीनां न खलु न खलु योषित्सन्निधिः संविधेयः ॥
हरति हि हरिणाक्षीक्षिप्तमक्षिक्षुरप्रप्रहत शमतनुत्रं चित्तमप्युन्नतानाम्" ॥ १ ॥

जिनगृहवासे तु न तथा निरंतरं स्त्रीसंसक्तिसंभवः कदाचिच्चैत्यवंदनार्थमेव क्षणमागत्य गंत्रीणां श्राविकादीनां यतिभिः सह तथाविधप्रसंगानुपपत्ते स्तस्मात् प्राणातिपातादिवदनेकदोषदुष्टत्वेन परगृहनिवासत्वेऽनुपपन्ने सति जिनगृहवास एवाधुनिकसाधूनां सांगत्यं निरत्तीयर्ति, तथाहीदं युगीनानां जिनगृहवासमंतरेणोद्यानवासो वा स्यात् परगृहवासो वा स्यादिति विकल्पयुगलकमुदयपदवीमासादयति, तत्र द्वितीयविकल्पः समुत्पन्नः किल दासेरक इव प्रथमतएव निर्वरपदप्रहारजर्ज्जरीकृताङ्गत्वेन नोत्थातुमुत्सहते, प्रथमोद्यानपक्षोऽथ सपक्षइव नासत्पक्षविक्षेपदक्षतामुपक्षिपति, स्त्रीसंसक्त्याद्याधाकर्म्मिकादिदोषकलापकलाकवलितत्वात् तथाहि उद्यानेऽपि वसतां यतीनां नूतनचूताङ्कुरास्वादकूजत्कलकंठपंचमोद्गारेणोन्मीलद्बहलविचिकिलवकुलमालतीपरिमलेन च तं तन्यते, समाहितचेतसामप्युत्कलिकोल्लासः, पंचमोद्गारादीनामुद्दीपनविभावत्वेन भरतादिशास्त्रेऽभिधानात् ततथा चिक्रीडिषागतकामुककामिनीसंकुलत्वेन स्त्रीसंसक्त्यादौ पुनः किंब्रूमहे,ऽथवाऽनवरतनवनवतरशास्त्राभ्यासपरावर्त्तनपराणां यतीनां माभूवन्नेतज्जन्या दोषास्तथापि लोकसंचारशून्योद्यानभूमौ वसतां सतां चौरचरटभटादिभिर्वस्त्रपात्राद्युपकरणोपहारस्यापि संभवःतदपहारे च शरीरसंयमविराधनाप्रसंगः अथ—"समोसढाउज्जाणोन्नयवंतो जुगंधरा यरिया तथाविओभयवंवइरसामी उज्जाणे" इत्याद्यनेकधोद्यानवासः श्रूयत इतिचेत्सत्यं, सोऽनापातासंलोकगुप्तैकद्वारोद्यानविषय स्तस्य च प्रायेण कलिकाले लोकस्य राज-

तस्करचरटाद्युपप्लवै र्बाधितत्वेन दौःस्थ्यादसंभव एवेत्युद्यानवासाः, कथमधुनातनमुनीनां कल्प्यमानः शोभेत, तस्मादिदानीं जिन-
गृहवास एव साधूनां संगतः प्रतिभाति," न च तत्राधाकर्मिकादयो दोषाः, तथा च प्रयोगश्चैत्यमिदानींतनमुनीनामुपभोगयोग्यमा-
धाकर्म्मादिदोषरहितत्वात्तथाविधाहारवन्नचायमसिद्धो हेतु र्जिनप्रतिमार्थं निष्पादिते आयतने आधाकर्मादिदोषानवकाशाद्यत्यर्थं
क्रियमाणे हि तस्मिन्नाधाकर्मादिदोषः प्रादुर्भवेत् । किंच यतीनां चैत्यनिवासमन्तरेण सांप्रतिकजिनभवनानां हानिः स्यात्तथाहि
पूर्वं कालानुभावादेव श्रीमन्तोऽव्यग्रचेतसो देवगुरुतत्त्वप्रतिपत्तिभरनिर्भरतयैतदेवपरंतत्वमितिमन्यमानाः श्रावकाः परमादरेण
चैत्यार्चितामकरिष्यन् साम्प्रतंतु दुःषमादोषान्नक्तं दिवं" कुटुंबसबलचिंतासंतापजर्झरितचित्ततयेतस्ततो धावतां प्रायेण दुर्गतानां
श्राद्धानां स्वभवनेष्वागमनं दुर्लभ मास्तां जिनमंदिरे, तथा च कुतस्त्या तत्समारचनादिचिंता तेषां" श्रीमतां तु प्रतिकलमदाल-
सवारविलासिनीघनसारशबलमलयजरसपंकिलपीनकुचकलशपीडनदुर्ललितानां निरंतरमेव भूरिभूरि लिप्सया पार्थिवसेवाहेवा-
किनां जिनगृहावलोकनमेव न संपद्यते, दूरे तच्चिंता, तदभावे च जिनसदनानां विशरारुता स्यात् तथाच तीर्थव्छित्तिरापनीपद्यते
चैत्यान्तर्वासे तु यतीनां तदुद्यमे च भूरिकालं जिनभवनान्यवतिष्ठेरन्, तथा च तीर्थाऽव्यवच्छेदस्तदव्यवच्छित्तिहेतोश्च किंचिदपवा-
दासेवनस्यागमेऽपि समर्थनाद्यदाह—"जोजेणगुणेणहिउजेणविणावानसिज्झएजंतु" इत्यादि तदेवं सूक्ष्मेक्षिकया विमृ-
शतां विदुषां चेतसि चैत्यवास एवेदानींतनमुनीनां संगतिमंगतीत्यादि सूराचार्योपन्यस्तंसमस्तमपि स्वहृदयेऽवधार्य ततो भावि-
निभूतवदुपचार इतिन्यायादुक्तं समुत्कटप्रावादुककरटिकरटतटपाटनपरिष्टनिष्ठुरप्रकोष्टकोष्टकेसरसटाभारभासुरकेसरिणा, भगवता
श्रीजिनेश्वरसूरिणा यथा भोभोः, सभासदः सदैव सर्वत्र यमलजननी मतिमामलहृदयाः किंचिद्युक्तायुक्तविचारविपयमुपन्यस्यमानं

प्रेक्षापूर्वकारिणो मात्सर्यमुत्सार्य माध्यस्थ्यमास्थाय सावधानीभूय शृण्वंतु भवंतः संतः। तत्र जिनभवननिवासएवेदानींतनमुनीनां समुचितस्तत्र निरपवादब्रह्मव्रतस्य संभवाद्यतीनां च तदेव गवेष्यत इत्यादिना "बंभवयस्सअगुती" इत्याद्यन्तेन यद्यतीनां परगृहवसतिदूषणं बभाषे भवता भवतापहारिहरिशीलशालिना तदिदानीं विकल्पपूर्वकं विचार्यते तथाहि—यदियदिदं परगृहवसतिर्दूष्यते भवता यतीनां तत्किं सर्वदा उतेदानीमेव यद्याद्यः पक्षस्तदानीमुद्यानादिषु वसतां यतीनां कथंचिच्चौराद्युपद्रवात्कथं प्रतीकारः स्यान्न च तदानीं कालसौख्येन चौराद्युपसर्गाभावादुद्यानवास एव यतीनां श्रूयते न परगृहवास इतिवाच्यं, तदापि तस्कराद्युपद्रवस्यानेकधाकर्णनात्तथा तस्मिन्नपि काले मुनीनां परागाराश्रयस्यागमेऽभिधानाच्च, यदुक्तं

"वाहिरगामेवुच्छा, उज्जाणेठाणवसहिपडिलेहा ॥ इहरा उगहिअभंडा वसहीवापायउड्डाहो" ॥ २ ॥

"सव्वेविअहिंडंतावसहिमग्गंतिजहउसमुआणं ॥ लद्धेसंकीलिअनिवेअणंतुतत्थेवउनियट्टे" ॥ २ ॥

तथा वृषभकल्पनया स्थापिते ग्रामादौ यतीनां वसतिगवेषणचिंतायामुक्तं यथा—"नयराइएसुघिप्पइवसहीपुव्वामुहं ठविअवसहं" इत्यादि ३ नचैवंविधा वसतिर्ग्रामादि मध्यमन्तरेण संभवति, उद्यानवासे एव च तदानीमभिमते प्रतिपदमुक्तन्यायेन ग्रामाद्यंतर्वसतिनिरूपणा नोपपद्येत, एवं च तदानीमपि परगृहवसतेर्यतीनां भावान्न प्रथमः पक्षः। अथ द्वितीयपक्षः कक्षीक्रियते। अत्रापि पृच्छामः कुतो दोषादधुनैव यतीनां परगृहवासो दूष्यते, स्त्रीसंसक्त्यादेरितिचेन्नास्य दोषस्य तदानीमपि भावान्नच तदापि तत्संसक्तिरहितवसतिपरिग्रहे तदलाभे वाऽभिहितयतनां विहायान्यः समाधि स्तथावशः इदानीमप्याश्रीयतां न्यायस्य समानत्वादेव चोक्तं यतनाविधायिनां स्त्र्यादिसंसक्तवसताविदानीमपि ब्रह्मचर्यागुप्त्यादयो दोषाः परास्ताः यदपि तसा-

दिदानीं जिनगृहवास एव साधूनां संगतः प्रतिभातीत्यादि, यत्यर्थक्रियमाणे हि तस्मिन्नाधाकर्मादिदोषः प्रादुर्भवेदित्यंतमुक्तं तदप्यधिकतरदोषकवलितत्वेन चौरचरटत्रासोल्लासात्पलायमानस्यात्यंतरौद्राकारसमग्रसनरसिकरसनापिशाचाक्रांतविकटाटवीसंकटनिपातकल्पनामुपकल्पयति, तथाहि—परगृहे कदाचिदाधाकर्मांगनासंसक्तिप्रभृतिदोषदर्शना तत्त्यागेन जिनसदनांतर्निवसतां सतां शीलवतां साधूनां प्रत्यहं भगवत्पुरतः स्फारशृंगारोदाररंभातिलोत्तमावतारतारमधुरस्वरगायन्नृत्यद्वारविलासिनीनां साङ्गभंगसानङ्गापाङ्गनिरीक्षणक्षणदाकराकरवदनकुंदकलिकाविशदरदनमसृणपंकाहीनपीनस्तनपटपृथुलश्रोणीतटप्रलोकनादयो वातसंधुक्षणेनेदानीं तथाविधसत्वविवेकविकलसैष्यादिमुनीनां सातिरेकमन्मथविकारांगारान् दीप्येरन् ततश्चेदं समुपस्थितं, "यत्रोभयोः समो दोषः परिहारश्च तादृशः ॥ नैकपर्यनुयोज्यः स्यात्तादृशार्थविचारणे" ॥१॥ प्रत्युताऽयं विशेषोऽस्मत्पक्षे स्त्रीसंसक्तपरगृहे कदाचिद्वसतामप्युक्तदोषाऽसंभवस्तत्र यतनाभिधानात्पक्षेतु चैत्यवासस्य सर्वथा वर्जनीयत्वेन क्वचिदपि यतनानभिधानादेतद्दोषपोषः केन वार्यते, न च वक्तव्यं गृहिगृहाणां संकीर्णत्वाद्यतनाकरणेऽपि नोक्तदोषमोषःकर्तुं शक्यत, इति प्रमाणयुक्तस्यैव गृहमंदिरस्य प्रायेण यत्याश्रयणीयत्वेनाभिधानात्तत्र चोक्तदोषपरिहारस्य सुशंकत्वादतएव गृहिणा सकलगृहसमर्पणेऽपि यतीनां तस्यान्यस्य वा दौर्मनस्यनिरासाय मितावग्रहाध्यासनं सूत्रे प्रत्यपादि, यदुक्तं—"एवमग्गहविजज्जोग्गं" इत्यादि प्रमाणयुक्तपरगृहालाभेतु संकीर्णेऽपि तस्मिन्यतनया वसतां न दोषः, यदुक्तं—"निच्छउपमाणजुत्ताखुड्डलिआएवसंतिजयणाएत्ति" किंच जिनगृहवाससमर्थनमात्मनो महानर्थकारित्वान्न चारिमाणमंचति सिद्धान्ते चैत्यान्तर्वासस्य मुनीनामत्यंताशातनाहेतुत्वेनोक्तत्वात्तस्याश्चाल्पीयस्या अप्यनंतभवामयवृद्धिकारणत्वेन पथ्याऽसेवनतुल्यत्वात्तथाचागमः "दुब्भिगंधमल०१ जइ-

विन आहाकम्मं० २ आसायणमिच्छत्तं० १" तस्मात्कथंचिदाधाकर्मिकवसतिनिवासस्यापि सिद्धान्ते प्रतिपादितत्वाज्जिन-
भवननिवासस्य चात्यंतदूषितत्वाद्वसतिवासः साधूनामुपपन्न इति, तथाच प्रयोगः यतीनां परगृहवासो विधेयो निःसंगताऽभिव्यं-
जकत्वाच्छुद्धोञ्छग्रहणवदिति तथा यदपि च चैत्यवासमन्तरेणेत्यादिना तथा च तीर्थाव्यवच्छेद इत्यंतेन तीर्थाव्यवच्छित्त्या चैत्य-
वासप्रतिष्ठापनं तदपि विचारगौरवाक्षमत्वात्केवलमुग्धलोकविप्रतारणमेव, यतः केयं तीर्थाव्यवच्छित्तिः किं यतीनां चैत्यान्तर्वासेन
भगवद्देवगृहबिंबाद्यनुवृत्ति राहोश्विच्छिष्यप्रतिशिष्यपारंपर्येणाविच्छिन्नप्रसरा सम्यग्ज्ञानदर्शनचारित्रप्रवृत्तिः नतावदाद्यश्चैत्यवास-
मन्तरेणापि भगवद्बिंबाद्यनुवृत्तिमात्रदर्शनात्तथाहि। पूर्वदेशेऽद्यापि तादृक्प्राकृतलोकेन कुलदेवताबुद्ध्या नमसीकृताऽपेया, ऽभक्ष्या-
दिनापि नमस्यमानानां जिनबिंबानामनेकधोपलब्धेरन्यतीर्थिकपरिगृहीतानां च तेषां तथैवानुवृत्त्युपलंभाच्च, तथा चैतावता भ-
वदभिमततीर्थाव्यवच्छित्तिसिद्धेः किं निष्फलेन चैत्यवाससंरंभेण नचैतावता तीर्थाव्यवच्छेदकार्येननिःश्रेयसादिफलसिद्धिर्मिथ्या-
दृष्टिपरिगृहीतानां प्रतिमानां मोक्षमार्गानङ्गत्वेनाभिधानात् "मिच्छदिट्ठिपरिग्गहियाउ पडिमाउ भावगामोनहुंति" इति
वचनात् ॥ अथ द्वितीयः कल्पस्तर्हि सैव तीर्थाव्यवच्छित्तिरभ्युपेयतां मोक्षमार्गत्वात्किंतदनुगुणोत्सूत्रचैत्यवासाश्रयणेन, यदुक्तं—
"सीसोसभिलगो" १ ॥ सम्यग्ज्ञानदर्शनचारित्रानुवृत्तिं विना च जिनगृहबिंबसद्भावेऽपि तीर्थोच्छित्तेरतएव जिनांतरेषु केषु-
चिद्रत्नत्रयविरहात् क्वापि जिनबिंबं संभवेऽपि तीर्थोच्छेदः प्रत्यपादि, स्वयमपि कल्पिता चेयं प्रकृता तीर्थाव्यवच्छित्तिरागमेविसंवादि-
त्वाद्व्यर्थैव, यदाह—"नयमयविप्पेणय" १ इत्यादि किंच भवतु जिनगृहाद्यनुवृत्तिस्तीर्थाव्यवच्छित्तिस्तथापि न यतिचैत्य-
वासजिनगृहाद्यनुवृत्त्योः श्यामत्वमैत्रतनयत्वयोरिव प्रयोज्यप्रयोजकभावस्तथाहि—श्यामो देवदत्तो मैत्रतनयत्वान्न चात्र श्यामत्वे-

मैत्रतनयत्वं प्रयोजकं किंतु शाकाद्याहारपरिणतिलक्षणउपाधि रेवं "न यतिचैत्यान्तर्वासप्रयुक्ता तदनुवृत्तिस्तदन्तर्वसद्भिरपि यतिसातशीलतया तज्जीर्णजीर्णोद्धारादिचिंतामकुर्वाणैस्तदनुवृत्तेरनुपपत्तेः किंतु तच्चिंता प्रयुक्ता तदनुवृत्तिस्तावच्छ्राद्धैरेव कुर्वद्भिस्तदनुवृत्तिः कथं" न स्यान्नचोक्तन्यायेन श्राद्धानां दुर्गतानां श्रीमतां चेदानीं तच्चिंताकरणासंभवइतिवाच्यं, दुःषमादोषात्केषांचित्तथात्वेप्यन्येषां महात्मनां शुद्धश्रद्धावंधुराणां तत्संभवात्तथाहि। दृश्यंत एव संप्रत्यपि केचन पुण्यभाजः श्रावकाः स्वकुटुंबभाराटोपं क्षमतनयेषु निक्षिप्य जिनगृहादिचिंतामेव सततंविदधाना अतस्तैरेवानुवृत्तिहेतुतच्चिंतासिद्धेः किमिदानींतना भवादृशा अपि सूरयश्चैत्योपदेशादनेकानारंभानारभमाणा मुधैव क्लिश्यंत इति यदि जोज्जेणेत्यादिना तीर्थानुच्छित्तिहेतोरपवादासेवनेन चैत्यवासस्थापनं तदप्यविदितसिद्धान्ताभिप्रायतां भवतः प्रकटयति, अस्यान्यार्थत्वादत्र हि यः कश्चिद्यत्यादि येन ज्ञानादिना गुणेनाधिको येन च विना यत्संघादिकार्यं महत्तमं न सिद्ध्यति तेन तत्र स्वगुणे वीर्यस्फोरणं विधेयमित्ययमर्थस्तथाह्येतदुत्तरार्द्धमेवं स्थितं "सो तेण तम्मिकज्जेसव्वत्थामं नहावेइ" इति। अतो नैतस्मादपि भवदभिप्रेतसिद्धिः एवं च समस्तपरोपन्यस्तोपपत्तिनिराकरणाद्यतीनां जिनभवननिवासनिषेधसिद्धौ स्वपक्षे साधनमभिधीयते, जिनगृहवासो मुनीनामनुचितो जायमानदेवद्रव्योपभोगादिमत्त्वात् प्रतिमापुरतो भक्तवितीर्णवलिग्रहणवन्नचायमसिद्धो हेतुः तत्रवसतां देवद्रव्योपभोगस्य शयनासनभोजनादिकरणेनानेकजन्मदारुणविपाकस्यावश्यंभावित्वान्नापि विरुद्धः हेतोर्मुनियोग्यतया व्याप्यत्वे हि स स्यान्नचैवमस्ति "देवस्सपरीभोगो अणंतजम्मेसुदारुणविवागो जंदेवभोगभूमी वुट्टीनहुवट्टइचरित्ते" १ इतिसिद्धान्तेन देवभूमिंभुंजानस्य यतेश्चारित्राभावेन विपाकदारुणत्वस्य प्रतिपादितत्वान्नापि सत्प्रतिपक्षः आगमोक्तत्वादिति प्रतिबलानुमानस्य प्रागेवनिरस्तत्वान्नापि वाधितविषयः प्रत्यक्षादि-

भिरनपहृतविषयत्वान्न च प्रत्यक्षेणैव संप्रति जिनगृहे वासदर्शने तद्वासस्य धर्म्मिणो मुन्ययोग्यतायाः साध्यधर्मस्य हेतुविषयस्य वाधितत्वेन विषयापहारात्कथं न हेतुर्वाधितविषयइतिवाच्यं तेषां मुन्याभासत्वेन तत्र तद्वासदर्शनेनापि न तद् वासस्य मुन्ययोग्यताया वाधितत्वमितिहेतोर्विषयापराभावान्नवाधितविषयत्वमिति, ततश्चैत्यं मुनीनामुपभोगभोग्यमाधाकर्म्मादिदोषरहितत्वादिति भवकत्हेतुरुक्तन्यायेन मुनीनां चैत्योपभोगभोग्यतया देवद्रव्योपभोगादिदोषै रागमे वाधितत्वात्कालात्ययापदिष्टः । एवं च सति भगवद्गुणगायनपण्यस्त्रीनर्त्तनशंखपटहभेरीमृदंगाद्यातोद्यवादनवकुलविचिकिलमालतीप्रमुखामोदितसकलजिनभवनमालापूजाविच्छित्तिविरचनादिभक्त्यार्हद्भवने देवद्रव्योपभोगात्

"यदीच्छेन्नरकं गंतुं, सपुत्रपशुवांधवः ॥ देवेष्वधिकृतिंकुर्याद्गोषु च ब्राह्मणेषु च" १

नरकाय मतिस्ते चेत्पौरोहित्यं समाचार ॥ वर्षं यावत्किमन्येन, माठपत्यंदिनत्रयं ॥ २ ॥

इत्यादिप्रकारेण लोकालोकनिंदनान्माठपत्याद्दीर्घसंसारकार्याशातनातश्च कंपमानाः साधवो जिनमतनिष्णाताः कथंचिन्न वसंति किंतु—"ताहे सामीवासावासेउवागए" इत्यादीत्यावश्यकचूर्ण्यादिग्रन्थेषु वहुशो दर्शनात्साक्षादेव तीर्थकृद्गणधरनिषेवितायां संविग्ग सण्णि भद्द" इत्यादीति सप्रपंचजिनादिभिरनेकधा प्रतिपादितायां तथा—"धन्या अमी महात्मानो, निःसंगा मुनिपुंगवाः ॥ अपि क्वापि स्वकं नास्ति, येषां तृणकुटीरकं" इत्यादिवचनसन्दर्भलोकप्रशस्यधनकनकतनयवनिता स्वजनपरिजनत्यागरूपपरिग्रहतामुख्यास्पदभूतायां तथा—"सिज्जायरुत्तिभण्णइआलयसामित्ति तथा-सिज्जायरोपहूवापहुसंविट्ठोवहोइकायव्वो तथा मुत्तूणगेहं" इत्यादि । इत्यादिवहुधा सिद्धान्ताक्षरदर्शनसंजाततात्विकावबोधवुधजनवहुमतायां

वसतावेव सत्याभिधेयानगारनामधेयाः साधवोऽवस्थानमाचक्षते, नत्वत्यंतापवादेऽपि जिनसद्मनीति स्थित मित्थमुपन्यासप्रबंधेनोत्तरीकृतशून्यदिक्चक्रतारतरलावलोकनसूराचार्यं विधायोर्ध्वीकृतभुजदंडेनोक्तं भगवता कुदध्वांतध्वंसनभास्करणे श्रीजिनेश्वरसूरिणा यथा—

एवं सिद्धान्तवाक्यैर्बहुविधघटनाहेतुदृष्टांतयुक्तै, रुक्तैरस्माभिरेतैरवितथसुयथोद्भासनोष्णांशुकल्पैः ॥
कुग्राहग्रस्तचेताः परगृहवसतिं क्लेष्टियोऽसौ निकृष्टो दुर्भाषीबद्धवैरः कथमपि न सतांस्यान्मतोनष्टकर्णः ॥१॥

इति तार्किकसभासचक्र मानंधराजादिलोकप्रत्यायनार्थं भूयोऽप्यभिदधे श्रीजिनेश्वरसूरिणा, महाराज! युष्माकं लोके किंपूर्वपुरुपदर्शिता नीतिः प्रवर्त्तते उताधुनिकपुरुपदर्शिता नूतना, राज्ञोक्तं अस्मद्देशे समस्तेऽपि पूर्वजननराजनीतिः प्रवर्त्तते नान्या श्रीजिनेश्वरसूरिणोक्तं महाराज अस्माकमपि मते गणधरैश्चतुर्दशपूर्वधरैश्च यो मार्गो दर्शितः सएव प्रमाणीक्रियते नाऽन्यः राज्ञोक्तं इत्थमेवैतत् पूर्वपुरुषव्यवस्थापित एव पंथाः सर्वत्र प्रमाणपदवीमध्यास्ते, जिनेश्वरसूरिणोक्तं महाराज वयं दूरदेशादागताः पूर्वपुरुपविरचितस्वसिद्धान्तपुस्तकानि न कानिचिदानीतानि तदेतेषां मठेभ्यो महाराज यूयमानयत पूर्वपुरुपविरचितसिद्धान्तपुस्तकगंडलकं, येन युष्माकं प्रत्यक्षं सन्मार्गनिश्चयाक्षराणि दर्शयामः, ततो राज्ञोक्तं महद्युक्तमेते वदंति, भोभोः श्वेतांबरसूरयः! स्वकीयश्वेतांबरमेकं प्रेषयत पुस्तकं दर्शनार्थं येन मदीयपुरुषा आनयंति, तत एतेषामेव पक्षस्तेष्वपि भविष्यतीति निश्चिन्वंतः श्रीजिनेश्वरसूरिवाग्निशलिपतान्तर्हृदया इवामी निशितवचनशस्त्रास्तूष्णींभूय स्थिताः सर्वेऽप्याचार्याः राजपुरुषैस्तु गत्वा यत्प्रथमतएव हस्ते चटितं तदेवानीतं शीघ्रं पुस्तकगंडलकमानीतमात्रमेव छोटितं तत्र श्रीदेवगुरुप्रसादादशवैकालिकं चतुर्दशपूर्वधरविरचितं

निर्गतं तत्र प्रथममेवाऽयं निर्जगाम श्लोको यथा—"अन्नट्ठंपगडंलेणं" १ श्रीजिनेश्वरसूरिणोक्तं एवंविधे परगृहे वसंति साधवो न देवगृहे श्रीदुर्लभराजचित्तेऽतीव तल्लग्नं भणितं चाहो यथावदंत्येते तथैवैतत्सर्वैरप्यधिकारिभिर्ज्ञातं, यदुत निरुत्तरीभूताः सर्वथाऽसद्गुरवः ततः सर्वेऽधिकारिणो वदंति, श्रीकरणिकप्रभृतयः प्रत्येकं देव ? एते अस्माकं गुरवइति येन राजाऽसत्कारणेनास्मद्गुरूनपि बहु मन्येत, राजा च न्यायवादी यावन्नकिंचिज्जल्पत्यत्रप्रस्तावे भणितं विचक्षणशिरोमणिश्रीजिनेश्वरसूरिणा, महाराज ? कश्चिद्गुरुः श्रीकरणाधिकारिणः कश्चिन्मांडपिकाधिकारिणः कश्चिन्मंत्रिणः कश्चिच्छ्रेष्ठिनः समभून्महाराजयाधिष्ठिः सा कस्य सत्का भवति राज्ञोक्तं मदीया जिनेश्वरसूरिणोक्तं, तर्हि महाराज कोऽपि कस्यापि संबंधी जातो, वयं न कस्यापि ततो राज्ञात्मसंबंधिनो गुरवः कृतास्ततो महाराजेनोक्तं, सर्वेषां गुरूणां सप्त सप्त गद्दिकारत्नपटीनिर्मिताः किमित्यसद्गुरूणां नीचैरासने उपवेशनं सूरिणोक्तमस्माकं गद्दिकोपवेशनं न कल्प्यते, राजा किमिति श्रीजिनेश्वरसूरिर्महाराज शृणु भवति नियतमत्रासंयमइत्यादिवृत्तार्थो व्याख्यातः राज्ञोक्तं कुत्र यूयं निवसत, सूरिणोक्तं महाराजविरोधिरुद्धत्वात्कथं स्थानं, राज्ञोक्तं, अहोऽमात्य ? अस्ति करडिहट्टिकामध्ये बृहत्तरमपुत्रगृहं तद्दापयितव्यमेषां, तत्क्षणादेव लब्धं, भूयोऽपि पृच्छति, महाराजो ? भोजनं केनविधिना भवतां अत्रान्तरे पुरोहितः देव ? किमेषां महात्मनां वयं ब्रूमहे, लभ्यते लभ्यते साधु साधु चैव न लभ्यते अलब्धे तपसो वृद्धिर्लब्धे देहस्य धारणा ? अतः कदाचिदर्द्धोदरपरिपूर्त्तिः कदाचिदौपवासमेतेषां, राजा सानंदं सविषादं च यूयं कतिसाधवः स्वपुरोहितः देव ? सर्वेऽप्यमी अष्टादश, राजा एकहस्तिपिंडेन सर्वेऽपि तृप्ता भविष्यंति, ततो भणितं जिनेश्वरसूरिणा महाराज महाराज पिंडो नकल्पते मुनीनामितिपूर्वमेव सिद्धान्तपठनपूर्वकं प्रतिपादितं युष्माकं पुरतस्ततो ऽहो निःस्पृहत्वममीषामित्यंतःप्रीतेन राज्ञा प्रत्य-

पादि, तर्हि मदीयमानुपेऽग्रतःस्थिते सुलभाभिक्षा भविष्यति किंबहुनेत्थं वादंकृत्वा विपक्षान्निर्जित्य राजामात्यश्रेष्ठिसार्थवाहप्रभृति
पुरप्रधानपुरुषैःसह भट्टचट्टेपु वसतिमार्गप्रकाशनयशःपताकायमानकाव्यबंधान् दुर्जनजनकर्णशूलान् साटोपं पठत्सु सत्सु प्रविष्टा
वसतौ प्राप्तखरतरविरुदा भगवंतः श्रीजिनेश्वरसूरयः एवं गुर्ज्जरत्रदेशे श्रीजिनेश्वरसूरिणा प्रथमं चक्रे, वक्रमूर्धसु पादमारोप्य
वसतिस्थापनेति द्वितीयदिने विपक्षैरचिंति जज्ञे तावन्निरर्थकमुपायद्वितीयमिदानीमन्यएवैतन्निष्कासनोपायः कश्चन मंत्र्यते पट्टराज्ञी-
प्रियो नृपो यत्सा भणति तत्करोति तद्द्वारेणैते निष्कास्यंत इति स्वाभिप्रायस्तैः स्वकीयाधिकारिश्रावकेभ्यो निवेदितस्ततस्ते आ-
म्रकदलीफलद्राक्षादिफलभाजनानि प्रधानवस्त्राण्याभरणानि च प्राभृतं गृहीत्वा गता राज्ञ्याः सामीप्ये तस्या अग्रेऽर्हत्प्रतिमाया
इव पुरो वलिविरचनं चक्रे राज्ञी तुष्टा तत्प्रयोजनविधानाभिमुखी वभूव, अत्रान्तरे राज्ञः किंचिद्राज्ञी सविधे प्रयोजनमुपस्थितं
ततो दिल्लिकादेशसंबंधीपुरुषआदेशकारी राज्ञा तत्र प्रेषितो, यदुतेदं प्रयोजनं राज्ञ्यै निवेदय" देवेदानीं निवेदयामीत्युक्त्वा
शीघ्रं गतः राजप्रयोजनं निवेदितं राज्ञ्यै । प्रभूतानधिकारिणो नानाढौकनिकांश्चावलोक्य तेन चिंतितं येऽन्यदेशादागता आचा-
र्यास्तेषां निःसारणोपाय एव संभाव्यते, परं मयापि स्वदेशागताचार्याणां पक्षस्य पोषणं राज्ञःपुरो भणनीयं गतस्तत्र" प्रयोजनं
निवेदितं भवतां परं देव ? वृहत्कौतुकं तत्र गतेन दृष्टं, राजा कीदृशं, भद्रपुरुषः देव राज्ञी जिनवरबिंबाहूतिर्जाता यथार्हदग्रे वलि-
विरचनं क्रियते एवं राज्ञ्या अप्यग्रे कैश्चित्कृतं राज्ञा चिंतितं, ये मयान्यायवादिनो गुरुत्वेनाङ्गीचक्रिरे तेषां पृष्टिमद्यापि पापा न
मुञ्चन्ति ततो राज्ञा भणितः सएवपुरुषः यथा शीघ्रं राज्ञीपार्श्वे गत्वा भण" यद्देव एवं भाणयति यत्तवाग्रे दत्तं कैश्चित्तन्मध्यादेक-
मपि पूगीफलं यदि गृहीतं तदात्मनः स्थानं चिंतनीयं ततस्तेन तथोक्ते भयभीतया राज्ञ्या भो यद्येना नीतं तच्चेन स्वगृहेनेतव्यं

ममनास्तिप्रयोजनं पूगीफलमात्रेणापि एवमेषउपायो विफलतां प्राप्तस्ततस्तैश्चिंतितश्चतुर्थ उपायः तथा यदि राजा देशान्तरागत-मुनीन्बहुमंस्यते तदा सर्वाणि देवसदनानि त्यक्त्वा देशान्तरे व्रजिष्याम इति प्रघोषश्चक्रे, केनापि राज्ञेनिवेदितं राज्ञोक्तमतीव शोभनं गच्छतु यत्र रोचते राज्ञा देवगृहे पूजकावृत्त्या वटुकाधारिताः पूजनीया युष्माभिरितिभणित्वा परं देवगृहमंतरेण बहिः स्थातुं नशक्यते ततःकोऽपि केनापि व्याजेनागतः किंबहुना सर्वेप्यागताः स्थिताश्च गृहेषु श्रीवर्द्धमानसूरिरपि सपरिवारः क्षिति-पतिसन्मानेनास्खलितप्रचारः सर्वत्र देशे विहरति, कोऽपि किमपि कथयितुं नशक्नोति ततः श्रीजिनेश्वरः पण्डितः शुभलग्ने स्वपट्टे निवेशितः द्वितीयोऽपि तद्भ्राता बुद्धिसागरआचार्यः कृतः तयोर्भगिनीकल्याणमतिनाम्नी महत्तराकृता, पश्चाज्जिनेश्वरसूरि-भिर्विहारक्रमं कुर्वद्भिर्जिनचंद्र अभयदेव धनेश्वरहरिभद्रप्रसन्नचंद्रधर्मदेव सहदेव सुमतिप्रभृतयो बहवःशिष्याश्चक्रिरे, ततो वर्द्ध-मानसूरयः सिद्धान्तविधिना समाधिना देवलोकश्रियं प्राप्ताः पाश्चाच्छ्रीजिनेश्वरसूरिभिः श्रीजिनचंद्राभयदेवौ गुणपात्रमेताविति ज्ञात्वा सूरिपदे निवेशितौ क्रमेण युगप्रधानौ जातौ अन्यौ च द्वौ सूरी धनेश्वरो जिनभद्रनामा द्वितीयश्च" हरिभद्राचार्यः तथा धर्मदेवसुमतिविमलनामानस्त्रय उपाध्यायाः कृताः धर्मदेवोपाध्याय सहदेवगणी द्वावपि भ्रातरौ धर्मदेवोपाध्यायेन हरिसिंहस-र्वदेवगणिभ्रातरौ सोमचंद्रपंडितश्च शिष्या विहिताः सहदेवगणिनाऽशोकचंद्रः शिष्यः कृतः सचातीववल्लभआसीत् । स च श्रीजि-नचंद्रसूरिणाविशेषेण पाठयित्वा आचार्यपदे निवेशितस्तेन च स्वपदे हरिसिंहाचार्यो विहितः अन्यौ द्वौ सूरी प्रसन्नचंद्रदेवभद्रा-ख्यौ देवभद्रः सुमत्युपाध्यायशिष्यः प्रसन्नचंद्राचार्यप्रभृतयश्चत्वारोऽभयदेवसूरिणा पाठितास्तर्कादिशास्त्राणि, अतएवोक्तं श्रीचि-त्रकूटीयप्रशस्तौ, श्रीजिनवल्लभसूरिभिः यथा—

"सत्तर्कन्यायचर्चार्चितचतुरगिरः श्रीप्रसन्नेंदुसूरिः, सूरिः श्रीवर्द्धमानो यतिपतिहरिभद्रोमुनीड्देवभद्रः" ॥
"इत्याद्याः सर्वविद्यार्णवकलशभुवः संचरिष्णूरुकीर्तिस्तंभायंते धुनापि श्रुतचरणरमाराजिनो यस्य शिष्याः ॥१॥

श्रीजिनेश्वरसूरय आशापल्ल्यां विहृतास्तत्र च व्याख्याने विचक्षणा उपविशंति, ततो विदग्धमनःकुमुदचंद्रिकासहोदरी संविग्नवैराग्य वर्द्धनी लीलावत्यभिधाना कथा *विदधे, श्रीजिनेश्वरसूरिभिस्तथा डिंडियाणकग्रामप्राप्तैः पूज्यैर्व्याख्यानाय चैत्यवास्याचार्याणां पार्श्वाद्याचितं पुस्तकतैः कलुपितहृदयैर्न दत्तं ततः पश्चिमप्रहरद्वये विरच्यते प्रभाते व्याख्यायते इत्थं च तत्रैव कथानककोशश्चतुर्मास्यां कृतस्तथा मरुदेवानाम्नी गणिन्यभूत्तया चानशनं गृहीतं चत्वारिंशद्दिनानि स्थिता श्रीजिनेश्वरसूरिभिः समाधानमुत्पादितं तस्याः भणिता च यत्रोत्पत्स्यते तत्स्थानं निवेदनीयं तयाप्येवं भगवन्विधास्ये इतिप्रतिपन्नं पंचपरमेष्ठिनः सरंती सा स्वर्गं गता जातो देवो महर्द्धिक एवं च तावदितश्च श्राद्ध एको युगप्रधाननिश्चयाय श्रीउज्जयंतगिरौ गत्वा साधिष्ठायकं सिद्धिक्षेत्रमेतदतोऽम्बिकादि-देवताविशेषो यदि मम युगप्रधानं प्रतिपादयिष्यति ततोऽहं भोक्ष्ये नान्यथेति सत्वमालंब्यावस्थित उपवासान्कर्तुमारब्ध एतस्मि-न्नवसरे महाविदेहे श्रीतीर्थंकरवंदनार्थं गतस्य ब्रह्मशांतेस्तेनार्यिका जीवदेवेन संदेशको दत्तः यथा त्वया श्रीजिनेश्वरसूरीणामग्रे इदं निवेदनीयं, तथाहि—

"मरुदेवीनाम अज्जा, गणणीजा आसि तुम्हगच्छंमि ॥ सग्गंमीगयापढमे, जाउ देवोमहिड्ढीउ" १ ॥
"टक्कलयंमिविमाणे दुसागराऊसुरोसमुप्पन्नो ॥ समणे सस्सजिणेसरसूरिस्सइमंकहिज्जासि" २ ॥

* विक्रमसंवत् १०९२

टक्कउरेजिणवंदण, निमित्तमेवागएणसंदिट्ठं ॥
चरणंमिउज्ज मोभे, कायव्वो किंच सेसेहिं ॥ ३ ॥

तेनापि च ब्रह्मशांतिना स्वयं गत्वाऽसौ संदेशकः सूरिपादानां पुरो न प्रकाशितः किंतर्हि युगप्रधाननिश्चयनिमित्तप्रारब्धोपवासश्रावक उत्थापितस्ततस्तस्यांचले लिखितान्यक्षराणि यथा, म स ट सट च भणितश्च गच्छ पत्तने यस्याचार्यस्य हस्तेन प्रक्षालितानि यास्यंत्येतान्यक्षराणि स एवेदानींतनकाले भारते वर्षे युगप्रधानस्ततस्तेन श्रीनेमिजिनं वंदित्वा कृतपारणकेन पत्तनमागतेन सर्वासु वसतिषु गत्वा दर्शितान्यक्षराणि, परं न केनापि बुद्धानि यदातु श्रीजिनेश्वरसूरिवसतौ गत्वा दर्शितान्यक्षराणि तदा वाचयित्वा गाथात्रयमेतदिति समुत्पन्नप्रतिभैश्चेतसि पर्यालोच्य, श्रीजिनेश्वरसूरिभिस्तान्यक्षराणि प्रक्षालितानि ततस्तेन श्रावकेण चिंतितं निश्चितं युगप्रधान एष इति, विशेषतो गुरुत्वेन चाङ्गीकृत इति, इत्येवं श्रीमहावीरतीर्थंकरदर्शितधर्मप्रभावनां कृत्वा श्रीजिनेश्वरसूरयः देवलोकं प्राप्ता इति, पश्चाज्जिनचंद्रसूरिवर आसीद्यस्याष्टादशनाममालाः सूत्रतोऽर्थतश्च मनस्यासन्, सर्वशास्त्रविदा येनाष्टादशसहस्रप्रमाणा संवेगरंगशाला* मोक्षप्रासादपदवीजभव्यजंतूणां कृता येन जाबालिपुरे विहृतेन श्रावकाणामग्रे व्याख्यानं चीवंदणमावस्सयेत्यादि गाथायाः कुर्वता ये सिद्धान्तसंवादाः कथितास्ते सर्वे सुशिष्येण लिखिताः शतत्रयप्रमाणो दिनचर्याग्रन्थः श्राद्धानामुपकारीजातः, सोऽपि श्रीवीरधर्मं याथातथ्येन प्रकाश्य दिवं गतस्तदनन्तरं श्रीमदभयदेवसूरिर्नवाङ्गवृत्तिकर्त्ता युगप्रधानोऽभवत्स च कथं नवाङ्गीवृत्तिकरणे पाटवमाविश्चकारेति तत्स्वरूपं किंचिदुच्यते, तथाहि—

* विक्रम सं० ११२५ छत्रावल्लीपुर्याम्.

किल तत्र भगवन्तः श्रीमदभयदेवाचार्याश्चरणवर्यसामाचारीचातुरी धुरीणा अरीणग्रामनगराकरादिषु विहारेण महीमंडलं पवित्रयमाणाः शंभाणकग्रामे कदाचिद्विहारक्रमस्वरूपेणागताः तत्र च किंचिच्छरीरापाटवकारणं बभूव,, यथा यथौपधादि प्रयुज्यते तथा तथाऽसौ दुष्टरोगो वरिवर्द्धते नमनागप्युपशांतिमायाति, पृथग्ग्रामस्थाः श्रीपूज्यपादभक्ताः श्रावका यदा यदा चतुर्दश्यां पाक्षिकप्रतिक्रमणं भवति तदा चतुर्योजनप्रमित क्षेत्रादागत्य तत्र पूज्यैः सह प्रतिक्रामंति, भगवंतोऽपि श्रीमदभयदेवसूरयः स्वशरीरमत्यंतरोगाक्रांतमवेत्य स्वकार्यमधुनाऽनुष्ठीयत इति विचिंत्य मिथ्यादुःकृतदाननिमित्तं युष्माभिश्चतुर्दश्यां सर्वैरपि निशेषेण ज्ञातव्यमिति ज्ञापनपूर्वकं तान् श्राद्धान्समाजुहुवुः, ततस्त्रयोदशी निशीथिनीनिशीथसमये शासनदेवता समागता तयाऽभाणि, स्वपिषि जागर्षि वा ततो मंदस्वरेणोक्तं, भगवति जागर्मि ततः प्रोचे देवतया प्रभो ? शीघ्रमुत्तिष्ठ नवैताः सूत्रकुक्कुटिका उन्मोहय, भगवानाह न शक्नोमि, देवता उवाच कथं न शक्नोषि अद्यापि चिरकालं जीविष्यसि नवाङ्गानां वृत्तिं प्रविधास्यसि भगवानवादीत् कथं विधास्याम्येवंविधे शरीरे ततोऽदायि देवतयोपदेशो, यथा स्तंभनकपुरे सेढिकानद्युपकंठे खंखरकपलाशमध्ये श्रीपार्श्वनाथप्रतिमा स्वयंभू विद्यते तस्याः पुरतो देवान्वंदस्व येन स्वस्थशरीरो भवसीत्यभिधाय तिरोहिता देवता, प्रातःक्षणे मिथ्यादुःकृतं हास्यंति गुरव इत्यभिप्रायेणागंतुकाः स्थानस्थिताश्च सर्वे श्रावकाः समेत्य समाजग्मुः प्रणता स्तैः पूज्यपादास्ततो भगवद्भिः स्तंभनकपुरे श्रीपार्श्वनाथो देवोऽस्माभिर्वंदनीय स्ततोऽज्ञायि श्राद्धैरहो निश्चितं कश्चिदुपदेशः श्रीपूज्यानामभूत्तेनेदमावेदयंतीति ततस्तैर्भणितं वयमप्यागमिष्यामस्ततो गुरोर्निमित्तं वाहनं कृतमारूढास्तत्र गुरवः प्रभूणां प्रथमं बुभुक्षा सर्वथैव नष्टासीत्परं स्तंभनकपुरं प्रति प्रस्थितानां प्रथमप्रयाणक एव रसविषयोऽभिलाषो बभूव, क्रमेण धवलकं यावत्प्राप्तानां शरीरं सुस्थं

संजातं पश्चात्पादैरेव स्तंभनकपुरे विहृताः, श्रावकाः श्रीपार्श्वनाथप्रतिमामवलोकयितुं प्रवृत्ता यावत्कुत्रापि नदृष्टाततो गुरवः पृष्टास्तै रुक्तं, खंखरपलाशमध्येऽवलोकयध्वं ततस्तत्राऽवलोकिता दृष्टा च देदीप्यमाना तत्र च प्रतिदिनं गौरेका स्नात्राय दुग्धं क्षरति ततस्तुष्टैरागत्य भणितं श्राद्धैर्गुरोः पुरो यथा भगवन्दृष्टा युष्मदुक्तप्रदेशे प्रतिमा, ततश्चलितः स भगवान्भक्त्या वंदनाय वीक्षितातत्र प्रणम्य शिरसोर्ध्वंस्थित एव देवप्रभावात्तदेव जयतिहुयणवरकप्परुक्ख" १ इत्यादि नमस्कारद्वात्रिंशिका चक्रे, ततोंऽत्यनमस्कारद्वय मतीवदेवाद्याकृष्टिपर मवगम्याभिदधे, देवताभिर्यदुत भगवंस्त्रिंशतापि नमस्कारैरध्येतॄणां सर्वेषामपि भद्रं विधास्यामः समग्रपाठकानां प्रत्यक्षीभवनमस्माकं कष्टावह" मतो नमस्कारद्वयमेतदपसार्यतामाचार्यैस्ततस्तदुपरोधात्तथैव विदधे, दाक्षिण्यमहोदधिभिस्तैः समस्तसंघेन सह चक्रे चैत्यवंदनं, समुदायेन विस्तरेण स्नात्रविलेपनमुकुटकुंडलाद्याभरणसुरभिपुष्पादिभिः पूजा कृता, श्रीमदभयदेवाचार्यैः स्थापना विहिता विशालशालावलानकत्रिकाद्युपशोभितं संजातमुत्तुंगतोरणं देवमंदिरं ततः श्रीमदभयदेवसूरिस्थापितः स श्रीमान्स्तंभनकस्थितपार्श्वनाथः समस्तलोकवांछितपूरणेन तीर्थमिति कृत्वा सर्वत्र प्रसिद्धिं जगाम, भगवंतोऽपि ततः स्थानाच्छ्रीअणहिल्लपत्तनं समाजग्मुः, श्रीजिनेश्वरसूरिप्रतिष्ठिताधिष्ठितकरणिहट्टिकावसतौ च तत्र तस्थुः, स्थितैश्च तत्र नवाङ्गानां स्थानाङ्गसमवायाङ्गविवाहप्रज्ञप्तिप्रभृतीनां वृत्तयः कर्तुमारेभिरे, ताश्च कुर्वतां यत्र कुत्रापि संदेह उत्पद्यते तत्स्थानं स्मरणप्रस्तावे जया विजया जयंत्यपराजिताख्या देवताः स्मृताः सत्योऽभिहिता महाविदेहे तीर्थंकरपार्श्वे गत्वा पृष्ट्वा निःसंदेहं कृत्वा भगवते प्रतिपादयंति, तदानीं च तत्र चैत्यनिवास्याचार्यद्रोणाचार्योऽस्ति तेनापि सिद्धान्तो व्याख्यातुं समारब्धः सर्वेऽप्याचार्याः कपलिकां गृहीत्वा श्रोतुमागच्छंति, तथाऽभयदेवसूरिरपि तत्र गच्छति, यतः—

"स्वयं विदंतोऽपि हि सम्यगर्थं सिद्धांततर्कादिकशास्त्रवाचां ॥
शृण्वंति गत्वा लघुतोऽन्यतोपि, निर्मत्सरा एव गुणेषु संतः ॥ १ ॥

ततोऽसावपि भगवद्गुणसौरभाकृष्टः स्वसान्निध्ये प्रभोरासनं दापयति व्याख्यातुश्च तस्य यत्र संशय उत्पद्यते तत्र तथा नीचैः स्वरेणाभिधत्ते, यथान्ये नाकर्णयंति, एवं प्रत्यहं व्याख्यां विदधतस्तस्यान्यस्मिन्दिने सिद्धांतस्थानं यद्व्याख्यायते तद्वृत्तिरानीता पूज्यै र्दत्ता च तस्य हस्ते दृष्ट्वा च तां चिंतितमाचार्येणात्यंतविस्मितचेतसा अहो किमियं साक्षाद्गणधरैर्दब्धा उतानेनैवेति विचिंत्योक्तं किं युष्मत्कृतेयं, ततस्तूष्णींभूतेषु प्रभुषु ज्ञातमाचार्येण निश्चितमनेन रचितेयं, यतोऽप्रतिषिद्धमनुमतमित्यपि च

"स्वगुणान्परदोषांश्च, वक्तुं प्रार्थयितुं परा" ॥
नर्थिनश्च निराकर्तुं, सतामास्यं जडायते ॥ १ ॥

ततोऽसौ कोहि नाम रत्नग्रहणे मंदादरो भवेत्तां चिंतयित्वा व्याचष्टे गुणं, बहुमानवांश्च प्रभुष्वागतेषु गतेषु सन्मुखमुत्थातुं प्रवृत्तश्च, पश्चात्तादृशं सुविहिताचार्यविषयमादरं दृष्ट्वा रुष्टा व्युत्थिताः संतः स्वमठांतःप्रविष्टाश्चैत्यवासिसूरयो बहुप्रलपितुमारब्धा, यथा—अहो केन गुणेनैषोऽस्मभ्यमधिको येनाऽस्मन्मुख्योप्ययं द्रोणाचार्योऽस्यैवंविधमादरं दर्शयति, पश्चाद्वयं कीदृशा भविष्याम इत्यादि, ततो द्रोणाचार्यस्तद्वचनमाकर्ण्य विशेषज्ञो गुणपक्षपाती सन्नूतनं वृत्तं कृत्वा सर्वेषु चैत्यवास्याचार्यमठेषु प्रेषितवान् वृत्तं, यथा—

"आचार्याः प्रतिसद्म संति महिमा येषामपि प्राकृतै, र्मातुं नाध्यवसीयते सुचरितैस्तेषां पवित्रं जगत् ॥
एकेनापि गुणेन किंतु जगति प्रज्ञाधनाः सांप्रतं योऽधत्ताऽभयदेवसूरिसमतां सोऽस्माकमावेद्यतां" ॥ १ ॥

ततः सर्वेप्युपशांताः श्रीमदभयदेवसूरीणामग्रे प्रत्यपादि द्रोणाचार्येण, यथा याः सिद्धांतादिवृत्तीस्त्वं विधास्यसि तास्सर्वा मया शोधनीया लेखनीयाश्च, तथा तत्र स्थितैः पूज्यैः पारिग्रहिकद्वितीयं प्रतिबोध्य सम्यक्त्वद्वादशव्रतधारि कृतमभूत्, तच्च समाधिना श्रावकत्वं प्रतिपाल्य देवभुवं प्राप, देवलोकात्तीर्थंकरवंदनार्थं महाविदेहे जगाम, प्रणेमाते सीमंधरस्वामियुगंधरस्वामिनौ, धर्मं श्रुत्वा पृष्टौ भगवंतौ ? अस्मद्गुरुः श्रीअभयदेवसूरिः कतिथे भवे मुक्तिं गमिष्यति, ततोऽर्हद्भ्यां भगवद्भ्यां भणितं तृतीये भवे सेत्स्यति एतदाकर्ण्य प्रमोदपुलकिताङ्गौ तौ सुरौ समाजग्मतुः स्वगुरुसमीपे कथिता जिनवार्त्ता वंदित्वा गच्छद्भ्यां पठितेयं गाथा यथा "भणिअंतित्थयरेहिं०" १ एषा च गाथा स्वाध्यायं कुर्वत्या शुश्राव प्रभुसंबंधिन्या व्रतिन्या आनाय्य गुरूणां तया निवेदिता, प्रभुभिरभिदधे, ज्ञातपूर्वमेवायमर्थोऽस्माभिः । कदाचिच्च श्रीपूज्याः प्रह्लादोदयग्रामे विजह्रुस्तत्र च संबंधिनो भक्ताः श्रमणोपासकाः संति तेषां यानपात्राणि पयोधौ वहंति तानि च प्रेषितानि तिष्ठंति तेषां गच्छतां क्रयाणकभृतानां वार्ता बभूव, यथा ब्रुडितानि प्रवहणानीति ततस्ते श्राद्धास्तां वार्तामाकर्ण्यात्यर्थं विमनस्काः संजाताः ते च श्रीअभयदेवसूरिसरणाप्रस्तावे एव वसतौ गता, वंदिताः पूज्यास्तैः पृष्टाः किमिति भो धर्मशीला अद्य वंदनकवेलाऽतिक्रमो जज्ञे, श्राद्धैस्तैरुक्तं भगवन् ? कारणेन, पूज्यपादैरुक्तं किं कारणं ? श्रावकैरुक्तं, भगवन् ? पोतबुडनोदधावाकर्णनेनासुखिनः आसामहे तेन नागतास्ततः क्षणमात्रं चित्ते ध्यानं धृत्वा भणितमाराध्यैरेतदेव यदुतात्र विषये युष्माभिरसमाधानं न विधेयमिति

सारार्क्षरभाषिणो हि सत्पुरुषाः, यावद्द्वितीयवासरे एत् जनस्तेनोदितं युष्मत्पोताः क्षेमेण जलधिमुत्तीर्णास्ततस्ततदाकर्ण्य समुद्भूत-
सालपूतगुरुवचनप्रत्ययैः श्राद्धैः सर्वसम्मतेनागत्य भणिता गुरवो भगवन् ? यावांल्लाभः क्रयाणकेन भविष्यति तदर्द्धेन
वयं सिद्धांतपुस्तकालेखनं कारयिष्याम स्ततः पूज्यैः कृतोपबृंहा अहो धन्या यूयं येषां मुक्तिकांताकंठाश्लेपकारणमीदृशः
परिणामः यतः—

इह किल कलिकाले चंडपाखंडिकीर्णे, व्यपगतजिनचंद्रे केवलज्ञानहीने ॥
कथमिव तनुभाजां संभवेद्वस्तुतत्वा, वगम इह यदि स्यान्नागमः श्रीजिनानां ॥ १ ॥
जिनमतविषयाणां पुस्तकानां स्ववित्तै रतिशयरुचिराणां लेखनं कारयेद्यः ॥
प्रथयति महिमानं वस्त्रपूजादिरम्यं सुगुरुसमयभक्तिमान्वो माननीयः ॥ २ ॥
सकलभरतनाथा यद्भवंतीह केचि, त्रिदशपतिपदं यद्दुर्लभं मानयंति ॥
यदपि च गुरुदुर्गग्रंथगर्भं विदंति, स्फुरितमखिलमेतत्तत्कृताराधनस्य ॥ ३ ॥

इत्यादि देशनया प्रोत्साहितैस्तैर्लेखितानि भगवद्भिरचितनानाविधसिद्धांतवृत्तिपुस्तकानि प्रचुराणि, ततः पुनरपि तस्मात्स्था-
नात्पूज्याः श्रीअभयदेवसूरयः श्रीपत्तनमलंचक्रिरे, नूनमेते च कुशाग्रमतयो निखिलसिद्धान्तपारगाः सुविहितचक्रवर्त्तिनो यु-
गप्रवराः संविग्नव्रतिव्रातग्रामण्यः पुण्यपात्रमित्यादि प्रसिद्धिं प्राप्ताः सर्वत्र महीमंडले, इतश्च तस्मिन्समये आसिकाभिधानदुर्ग-
वासी देवगृहनिवासी कूर्चपुरीयो जिनेश्वराचार्य आसीत्तत्र ये श्रावकपुत्रास्ते सर्वेऽपि तस्य मठे पठंति, तत्र च जिनवल्लभनामा

श्रावकपुत्रोऽस्ति तस्य जनको दिवं गत स्तं जननी प्रतिपालयति, पाठयोग्यश्चासौ प्रक्षिप्तस्तया तत्र मठे पठितुं, सर्वेभ्यश्छत्रेभ्यः तस्याधिकः पाठ आगच्छति, अथ कथंचित्तेन जिनवल्लभचट्टेन बहिर्गच्छता टिप्पनकमेकं प्राप्तं, तत्र च विद्याद्वयं लिखितमस्ति, सर्प्पाकर्षणी मोचनी च ततः कंठगतां कृत्वा यावत्प्रथमा विद्या प्रत्ययाय पठिता तावत् स्फटाटोपभीषणाः फूत्कुर्वाणाश्चंचलललज्जिह्वायुगलाः स्फुरदरुणलोचनाः सर्वाभ्यो दिग्भ्य आगच्छंतो विद्याप्रभावात्कृष्टा दृष्टा महानागा, निर्भयचेतसा चिंतितं तेन, नूनं सप्रत्ययेयं विद्या पुनरुच्चारिता द्वितीया तस्याः प्रभावेण पुनः पश्चान्मुखाश्चलिता चक्षुःश्रवसः 'एतच्च तत्स्वरूपं' श्रुतं सूरिणा ज्ञातं च निश्चितं सात्विकः पुण्याधिको गुणपात्रमेषस्तस्मादात्मसात्कर्तुं युक्त इति० ततस्तं द्राक्षाखर्ज्जूराक्षोटकखंडमंडकखंडमोदकादिदानपुरःसरं वशीकृत्य तन्मातरं मधुरवचनैः संबोधयामास, यदुतैष त्वदीयपुत्रोऽत्यंतप्राज्ञः स्फूर्त्तिमान्सात्विकः किंबहुना, आचार्यपदयोग्योऽस्ति, तदेनमस्मभ्यंप्रयच्छ, एषा तावकीना धर्मदेवकुलिका तवान्येषां च निस्तारको भविष्यत्यत्रार्थे नान्यथा किंचिद्वक्तव्यमित्यभिधाय द्रव्यं शतपंचकं तस्या हस्ते प्रक्षिप्य क्षिप्रं दिदीक्षे जिनवल्लभोऽध्यापित स्तेन समस्तलक्षणछंदोलङ्कारनाटकग्रहगणितादिका निरवद्या विद्या अधीता, कदाचित्तस्याचार्यस्य ग्रामादौ प्रयोजनमुपतस्थे, ततो गच्छता पंडितजिनवल्लभो भणितस्तावत्त्वया सर्वापि चिंता कर्त्तव्या यावत्प्रयोजनमनुशील्याहमागच्छामि विनयप्रणतोत्तमांगेन जिनवल्लभेनोक्तं पूज्यैर्यथा आदिष्टं तथा विधास्ये, परमाराध्यैः कार्यं निष्पाद्य शीघ्रमागंतव्यमिति, गतोऽसौ ग्रामान्तरं ततो द्वितीयेऽह्नि चिंतितं जिनवल्लभेन यदुत भांडागारमध्ये मंजूषा पुस्तकभृता दृश्यते तदेतेषु पुस्तकेषु किमस्ति निभालयामि, यतस्तद्दर्शं सर्वं जातमस्तीत्युच्छोटितमेकं पुस्तकं तच्च सिद्धांतसत्कं तत्रोक्तं पश्यति साधुना द्विचत्वारिंशद्दोषविशुद्ध-

पिण्डेन गृहस्थगृहेभ्यो मधुकरवृत्त्या गृहीतेन संयमनिर्वाहहेतवे देहधारणा कर्त्तव्या । न कल्प्यते यतीनां सचित्तपुष्पफलादिकं हस्तेनापि स्प्रष्टुं किमंगाहारयितुं, न युक्त एकत्र निवासो मुनीनामित्यादिविचारान्दृष्ट्वा मनसा विसितश्चिंतयामास, अहोऽन्य एव स कश्चिद्व्रताचारो येन मुक्तौ गम्यते विसदृशस्त्वस्माकमेष समाचारः स्फुटं दुर्गतिगर्त्तायां निपततामेतेन नकश्चिदाधार इति चेतसि पर्यालोच्य गंभीरवृत्त्या पुस्तकादिकं यथास्थिति कृत्वा गुरूक्तरीत्या स्थितः कतिपयदिनानंतरं कृतकार्यस्ततः समागतः आचार्यश्चिंतयति, किमपि स्थानं न हीनं जातं यावज्जिनवल्लभेन मठवाटिकाविहारद्रव्यसंभारकोष्ठागारप्रभृतिसर्वशतं तस्माद्यथायोग्यश्चिंतितस्तथा निश्चितमेप भविष्यति, किंतु सिद्धांतंविना शेषा अशेषा अपि तर्कालंकारादिविद्या अनेनाऽभ्यस्ता सिद्धांतश्च यथावस्थितः संप्रतितनकालापेक्षया संपूर्णः सांप्रतं श्रीअभयदेवसूरिसमीपे श्रूयते, तत्सिद्धांतवाचनाग्रहणार्थं तत्पार्श्वे जिनवल्लभं प्रेषयामि गृहीतायां तु सिद्धांतवाचनायां समस्तविद्या नितंबिनीवल्लभंजिनवल्लभं स्वपदे स्थापयिष्यामीति परिभाव्य वाचनाचार्यं कृत्वा निश्चिंतितोपेतभोजनादियुक्तिं च चिंतयित्वा जिनशेखराभिधानद्वितीयशिष्यवैयावृत्त्यकरसमेतं–श्रीजिनवल्लभं श्रीअभयदेवाचार्यसमीपे प्रेषितवान्, मरुकोट्टमध्ये नाणहिल्लपाटकं गच्छता रात्रौ तत्र मरुकोट्टमाणश्रावककारितजिनभवने प्रतिष्ठा विदधे, ततः पत्तने प्राप्तः श्रीअभयदेवसूरिवसतिं पृष्ट्वा प्रविष्टस्तत्र दृष्टो भगवांस्तीर्थंकरप्रतिरूपः सन्निकृष्टोपविष्टविशिष्टसिद्धांतवाचनार्थिप्रचुराचार्यः स्ववाग्वैभवावधूतदेवाचार्यः भक्तिवशोल्लसितबहलरोमांचकंचुकिकांचितकायलतिकेन वंदितस्तेन, ततो गुरुणा दर्शनमात्रेणैव योग्यो विशुद्धात्मफलक इव कश्चिदयं दृश्यत इति परिभाव्य मधुरवाण्या पृष्टः कुतो भवान्किंच भवतः प्रयोजनमागमनस्य ततो नियोजितकरकुड्मलेन भगवद्दर्शनोद्भूतनिरूपमानव-

हुमानजलपटलनिर्धौतान्तर्मलेन वचनवारिमान्यकृतामृतनिर्म्मितरोहिणीवल्लभेन जगदे गणिवल्लभेन भगवन्निजाखंडलक्ष्मीप्रकर्षेण स्वःपुरीदासिकायाः समागतः श्रीमदासिकायाः, श्रीजिनेश्वरसूरिणा स्वगुरुणा प्रेषितस्य मम मधुकरविभ्रमस्य यौष्माकीणवक्त्रांभोजविलीनसिद्धान्तरसपिपासितस्य मतिः सकलजनमनस्कामनाकल्पतरूणाम् भवताम् पार्श्वे सिद्धान्तवाचनामध्येतुं व्यवस्यति, ततः ॥ कालमीआगए विऊ अपत्तं च न वाइज्जापत्तं च न विमाणए ॥ १ ॥ इति विचिंत्याभिहितं युक्तं विहितं भवता यत्सिद्धांतवाचनाऽभिप्रायेणात्र समागतस्ततः प्रधानदिने वाचनां दातुमारब्धः यथा यथा सुगुरुर्जिनवचनवाचनां ददाति तथा तथा प्रमुदितचित्तः सन् सुशिष्यः सुधारसमिव तामास्वादयति, हर्षोत्फुल्लपद्मदृशं तं तादृशंशिष्यमभिवीक्ष्य गुरवोऽपि तोष पोष द्विगुणीकृतवाचनादानोत्साहा बभूवुः, किंबहूक्तेन तथा तथा ज्ञापनबुद्ध्या श्रीपूज्या वाचनां तस्मै दातुं प्रवृत्ता यथा स्तोककेनैव कालेन सिद्धांतवाचना परिपूर्णा जाता, तथा गुरोर्ज्योतिषिक एकः पूर्वप्रतिपन्न आसीद्यदि भवतां कश्चिद्योग्यः शिष्यो भवेत्तदाऽसौ मह्यं समर्प्पणीयो, येन तस्मै समग्रज्योतिषं समर्प्पयामि, ततः पूज्यैर्जिनवल्लभगणिस्समर्प्पित स्तेनापि जिनवल्लभाय ज्योतिषं सपरिज्ञानं प्रदत्तं। एवं च गृहीतसिद्धांतवाचनः सिद्धांतोक्तक्रियासम्यगनुष्ठानवर्द्धमानसः सम्यगधिगतसस्फूर्त्तिज्योतिषः स्वगुरोः समीपे गमनायमुत्कलवचनं प्रतीच्छति, प्रभुभिरभिहितं, वत्स सिद्धांतोक्तसाधुसमाचारस्तावत्समस्तोऽपि त्वयाऽवगतोऽतस्तदनुसारेण क्रियोद्धारेण यथा वर्त्तसे तथा विधेयं, श्रीजिनवल्लभगणिना पादयोर्निपत्य भणितं, यथा श्रीपूज्यपादा आज्ञापयंति तथैव निश्चितं प्रवर्त्तिष्ये, प्रधानदिने चलितो यथागतमार्गेण पुनर्मरुकोट्टे प्राप्तः आगच्छता सिद्धान्तानुसारेण देवगृहे विधिर्लिलिखे, येन विधिनाऽविधिचैत्यमपि मुक्तिसाधनं विधिचैत्यं स्यात्स चायं अत्रोत्सूत्रजनक्रमः

नच नच स्नात्रं रजन्यां सदा "साधूनां ममताश्रयो नच नच स्त्रीणां प्रवेशोनिशि" ॥
जातिज्ञाति कदाग्रहो नच नच श्राद्धेषु तांबूलमित्याज्ञाऽत्रेयमनिश्रिते विधिकृते श्रीजैनचैत्यालये १
इत्यादिविधिर्विधेयो येन सर्व चैत्यवंदनाद्यनुष्ठानं मुक्तये संपद्यत इति, ततोऽसौ स्वगुरुसमीपे गंतुं प्रवृत्तः 'प्राप्तो' माइयडग्रामे आसीकादुर्गादर्वाक् क्रोशत्रये स्थितस्तत्रैव गुरुमीलनाय पुरुषः प्रेपित स्तस्य हस्ते लेखो दत्तो, यथा युष्मत्प्रसादेन स्वगुरुसमीपे वाचनां गृहीत्वा माइयडग्रामेऽहं समागतोऽस्मि, पूज्यैः प्रसादं कृत्वाऽत्रैवागत्य मम मीलनीयं, ततो गुरुभिरज्ञायि, किमिति जिनवल्लभेनेत्थं निर्दिष्टं नात्रागतोऽभवत्ततो द्वितीयदिने सकललोकेन सार्द्धं समायात आचार्योऽभिमुखं गतो जिनवल्लभः, प्रणतो गुरुः, पृष्टा क्षेमवार्त्ता गुरुणा कथिता यथोक्ता सर्वापि वार्ता तेन ब्राह्मणसमादाननिमित्तं मेघादिस्वरूपाणि तथा ज्योतिषबलेन भणितानि कानिचिद्यथा गुरोरप्याश्चर्यकारीणि जातानि, भूतपूर्वकस्तद्वदुपचार इतिन्यायाद्गुरोरित्युक्तं, ततः पृष्टो गुरुणा किमिति मध्ये त्वं नागतः जिनवल्लभगणिनाऽभिहितं,भगवन् ? सुगुरुमुखाब्जिनवचनामृतं पीत्वा कथमधुना दुर्गतिगुप्तावात्मनः समुपचितपाशं चैत्यवासं विषवृक्षसदृशं सेवितुमिच्छामि । ततो गुरुणा भणितं भो जिनवल्लभ ? मयेदं चिंतितमासीद्यत्तुभ्यं स्वपदं दत्वा त्वयि स्वगच्छदेवगृहश्रावकादिचिंतां निवेश्य पश्चात्स्वयं सद्गुरुपार्श्वे वसतिमार्गमङ्गीकरिष्ये, ततो जिनवल्लभगणिना विकस्वरवदनारविंदेन भणितं, भगवन्नतीव शोभनमेतद्विवेकस्य हीदमेव फलं यद्धेयं परित्यागेनोपादेयमुपादीयते तर्हि समकमेव सुगुरुसमीपे गम्यते गुरुणेषन्निःश्वस्य प्रत्यपादि, यदुत वत्सेदृशी निःस्पृहता नास्त्यस्माकं यया चिंताकरणसमर्थपुरुषं विना स्वगच्छदेवगृहवाटिकादिचिंतां मुक्त्वा सुगुरुपार्श्वे वसतिवासमङ्गीकुर्म्महे ऽवश्यं भवता विधातव्यं वसतिवसनं

श्रीजिनवल्लभगणिर्भगवन्नेवं ततो गुरूर्व्याघुट्यासिकायां संप्राप्तः श्रीजिनवल्लभगणिरपि तत्सम्मतेन श्रीपत्तने विजहार, श्रीमदभयदेवसूरिपादान् वह्वादरेण वंदितवान् सद्गुरूणामतिशयेन समाधानं समजनि चिंतितं च, यथा परीक्षितस्तथैवैष जज्ञे, ततो मनसि विदन्तोऽपि न कस्यापि प्रतिपादयंति, यदुतैष एवास्मत्पदयोग्यो। यतो देवगृहनिवासिशिष्य इति हेतोर्गच्छस्य सम्मतं न भविष्यतीति, ततो गच्छाधारको वर्द्धमानाचार्यः स्वपदे निवेशितो जिनवल्लभगणये च स्वकीयोपसंपदं दत्तवंत,इतःप्रभृत्यस्यसदाज्ञायां सर्वत्र प्रवर्त्तितव्य मिति,, एकान्ते पुनः प्रसन्नचंद्राचार्यो भणितो मदीयपदे भव्यलग्ने जिनवल्लभगणिः स्थापनीय, इत्येवं च नवाङ्गवृत्तिं वर्त्तिनीमिव मुक्तिनगरस्य भव्यजनेभ्यः प्रतिपाद्य सिद्धांतोक्तविधिना समाधानेन देवलोकं गताः श्रीमदभयदेवसूरयः। प्रसन्नचंद्राचार्यस्यापि गुरुपदनिवेशनप्रस्तावो न जात स्ततस्तेनापि स्वायुःपरिसमाप्तिसमये श्रीदेवभद्राचार्याणां विज्ञप्तं, यत्सुगुरूपदेशो युष्माभिरेष सफलीकार्योऽवश्यमेव मया कर्तु नशाक्कित स्ततस्तैरपि प्रतिपन्नं वर्त्तमानयोगेनैवं करिष्यामः समाधानं भवद्भिर्विधेयमिति ॥ श्रीजिनवल्लभगणिवाचनाचार्योऽपि कतिचिद्दिनानि पत्तनभूमौ विहृत्य, न तादृशो विशेषेण बोधः कस्याप्यत्र गुर्ज्जरत्र मंडले विधातुं शक्यते येन समाधानमुत्पद्यते इति मनसि कृत्यात्मतृतीय आगमविधिना सुशकुनेन भव्यजनमनःसु क्षेत्रभूमिकासु भगवद्भणितविधिधर्मवीजनिक्षेपणार्थम् श्रीमेदपाटदेशादिषु विहारं चकार, ते च देशाः सर्वेऽपि प्रायेण चैत्यनिवास्याचार्यैर्व्याप्ताः सर्वोऽपि लोक स्तद्वासितो वर्त्तते, किंवहुना तादृशदेशान्तरस्थनानाग्रामनगरादिषु विहारं विदधान श्चित्रकूटाचलदुर्गे प्राप्तः यद्यपि तत्रत्यक्षुद्रैर्भावितो लोक स्तथाप्ययुक्तं किमपि कर्तु न शक्नोति, श्रीपत्तने श्रीगुरूणां महत्याः प्रसिद्धेः श्रवणात्ततो जिनवल्लभगणिना स्थानाय याचितास्तत्रत्यश्राद्धा स्तैश्चोक्तं चंडिकामठोऽस्ति, यदि तत्र तिष्ठथ,

ततो जिनवल्लभगणिना ज्ञातं दुष्टाभिप्रायेणैते भणंति तथापि तत्रापि स्थितस्य देवगुरुप्रसादाद्भद्रं भविष्यतीति चिंतयित्वा
भणितास्ते तत्रैव बहुमन्यध्वं यूयं येन तिष्ठाम स्तैरुक्तमतीव सम्मतमस्माकं तिष्ठथ यूयं ततो देवगुरून्संस्मृत्य देवतां चानुज्ञाप्य
स्थितास्तत्र देवता च तेषां ज्ञानेन ध्यानेन सदनुष्ठानेन तुष्टासती दुष्टप्रयुक्तं तत्प्रयुक्तदत्तावधाना रक्षति ते च श्रीजिनवल्लभग-
णिवाचनाचार्याः समस्तविद्यानिधानताः कथं तथाहि सर्वसिद्धांतवेदिनः सूत्रतोऽर्थतश्च कंठस्थपाणिन्याद्यष्टव्याकरणा मेघदूतादि
महाकाव्यादि सर्वकाव्यरुद्रटोद्भटदंडि वा मनभा महाद्यलङ्कारचतुरशीतिनाटकसमग्रज्योतिषशास्त्रजयदेवादि निःशेषच्छंदोग्रंथजिने-
न्द्रमतव्यवस्थापकाभयदेवानेकांतजयपताकादितर्क कंदलीकिरणावलीन्यायशंकरनंदनकमलशीलादि परसमयतर्कनिष्णाता अतस्त-
त्सौरभेण श्रीचित्रकूटे प्रकर्षेण विख्याताः संजाताः, सर्वे परदर्शनिकविप्रादिलोका आगंतुं प्रवृत्ताः यस्य यस्य यद्यच्छास्त्रविषयः
संशयः समुत्पद्यते स सर्वोऽपि जनस्तं तं पृच्छति, श्रीजिनवल्लभगणयोऽपि भास्करकरा इव विस्तृत्वराः समस्तमपि संशयान्ध-
कारमुच्छेदयंति, श्रावका अपि स्तोकं स्तोकेन समागच्छंति, ततः सिद्धान्तवचनानि श्रुत्वा तदनुसारेण क्रियामपि दृष्ट्वा साधारण-
सुद्दकसुमतिपल्हकवीरकमानदेवधंधकसोमिलकवीरदेवादिभिः श्रावकैः समाधिना श्रीजिनवल्लभगणिवाचनाचार्या गुरुत्वेन प्रति-
पेदिरे१ श्रीजिनवल्लभगणीशानां गुरूपदेशेनातीतानागतादिज्ञानं ज्योतिषपरिज्ञानं चातिशयितमासीद्भगवदंतिके साधारणश्राद्धः
परिग्रहप्रमाणं ग्रहीतुं प्रवृत्तः गणिमिश्रैरुक्तः कियन्मात्रं सर्वसंग्रहं करिष्यसि साधारणः, भगवन्! स्तं विंशत्या सहस्रैर्मे विम-
लज्ञानदृष्टयः श्रीजिनवल्लभगुरवः, श्रावकबहुतरं कुरु, ततः कृतानि त्रिंशत्सहस्राणि, पुनः पूज्याः महानुभाव इतोऽपि प्रभूततरं
परिभावय, साधारणः, प्रभो मदीयसमस्तगृहसारमूल्यगणनेऽपि पंचशतानि न पूर्यते कौतस्कुती ममाभ्यधिकतरद्रव्यसंप्राप्तिः

पुनर्हुंकृत्य प्रभव: । सर्वसाधारणसाधारणधार्मिकश्रावक किमसाध्यं पुण्यसंभारस्य माकुरु गणनातुलां चणकमात्रविक्रयिणोऽपि पुरुषा: संख्याविपक्षलक्षपतयो भवंति इति । साभिप्रायं गुरुवचनमाकर्ण्य निश्चितितं किंचित्कांचनसंप्राप्त्यादिकं भद्रं मम भविष्यतीति विचिंत्येषद्विहस्य च साधारणेनोक्तं । यद्येवं तर्हि भगवन्? भवतु सर्वपरिग्रहे ममैकं लक्षमिति । तथा वितीर्णगृहीतपरिग्रहप्रमाण: सन् सद्गुरुपदोपास्त्यऽपहस्तितप्रशस्तान्तरायकर्मा दिने दिने प्रवर्द्धमान: संपदा गुर्वाज्ञायां विशेषत: प्रवर्त्तमान: साधारण: सकलसंघस्य साधारण: समभवत् सट्टकादयोऽपि श्राद्धा: साधारणवत्सर्वत्र जिनवल्लभगणेराज्ञया प्रवर्त्तितुमारब्धास्तत्र कृतचातुर्मासिककल्पानां श्रीजिनवल्लभवाचनाचार्याणामाश्विनमासस्य कृष्णपक्षत्रयोदश्यां श्रीमहावीरदेवगर्भापहारकल्याणकं समागतं । तत: श्राद्धानां पुरो भणितं जिनवल्लभगणिना । भो: श्रावका? अद्य श्रीमहावीरस्य षष्ठं गर्भापहारकल्याणकं "पंचहत्थुत्तरे होत्था साइणा परिनिव्वुडे" इति प्रकटाक्षरैरेव सिद्धान्ते प्रतिपादनादन्यच्च तथाविधं किमपि विधिचैत्यं नास्ति, ततोऽत्रैव चैत्यवासिचैत्ये गत्वा यदि देवा वंद्यंते तदा शोभनं भवति, गुरुमुखकमलविनिर्गतवचनाराधकै: श्रावकैरुक्तं भगवन् यद्युष्माकं सम्मतं तत्क्रियते, तत: सर्वे पौषधिका: श्रावका सुनिर्मलशरीरा निर्मलवस्त्रा गृहीतनिर्मलपूजोपकरणा गुरुणा सह देवगृहे गंतुं प्रवृत्ता: । ततो देवगृहस्थितयार्यिकया गुरुश्राद्धसमुदायेनागच्छतो गुरून्दृष्ट्वा पृष्ठं को विशेषोऽद्य केनापि कथितं । वीरगर्भापहारषष्ठकल्याणककरणार्थमेते समागच्छंति, तया चिंतितं पूर्वं केनापि न कृतमेतदेतेऽधुना करिष्यंतीति न

१ केनापि अज्ञातजिनसिद्धान्तरहस्येनापि, नकृतं नप्रकाशितं,, प्रज्ञातजिनमतरहस्यैस्तु पुन अनेकधा विस्तरेण निरूपितं तथाहि वृहद्वृत्तौ पाठ । योन शेषसूरीणां अपराचार्याणाम् अज्ञातजिनसिद्धान्तरस्यानामित्यर्थ. लोचनपथेऽपि दृष्टि गोचरेऽपि, आस्ता श्रुतिसाधितपथे व्रजति याति, उच्यते पुनर्जिनमतज्ञै. भगवद् वचनवेदिभिरित्यर्थः विस्तरेणतु आचाराङ्गस्थानाङ्गादौ दृष्टव्यम् ।

युक्तं। पश्चात्संयती देवगृहद्वारे पतित्वा स्थिता द्वारप्राप्तान् प्रभूनवलोक्योक्तमेतया दुष्टचित्तया मया मृतया मृतया यदि प्रविशत ताद्दगप्रीतिकं ज्ञात्वा निर्वर्त्य स्वस्थानं गताः पूज्याः। श्राद्धैरुक्तं भगवन्नस्माकं बृहत्तराणि सदनानि संति, तत, एकस्य गृहोपरि चतु- विंशतिपट्टकं धृत्वा देववंदनादि सर्व धर्मप्रयोजनं क्रियते, षष्ठकल्याणकमाराध्यते। गुरुणा भणितं तत्किमत्रायुक्तं। तत आराधितं विस्तरेण कल्याणकं, जातं समाधानमन्येद्युर्गीतार्थैः श्रावकैर्मंत्रितं, यथा विपक्षेभ्योऽविधिप्रवृत्तेभ्यः पार्श्वाज्जिनोक्तो विधिर्विधातुं न लभ्यते ततो यदि गुरोः सम्मतं भवति तदा तले उपरि च देवगृहद्वयं कार्यते, स्वसमाधानं, गुरूणां निवेदितं गुरुभिरप्युक्तं, यथा—

"जिनभवनं जिनविंबं, जिनपूजां जिनमतं च यः कुर्यात्॥
तस्य नरामरशिवसुख, फलानि करपल्लवस्थानि" १॥

इति देशनया ज्ञातं श्राद्धैः श्रद्धाप्रधानैर्यद्गुरूणामभिप्रेतमेवैतल्लोकमध्ये च वार्त्ता जाता, यथैते देवगृहद्वितीयं कारयिष्यंतीति वार्त्तामाकर्ण्य प्रहलादनबृहत्तरेण बहुदेवश्रेष्ठिना कथितमेतेऽष्टकापालिका देवगृहद्वयं कारयिष्यंति राजमान्या भविष्यंतीत्येतच्च श्रुतं श्रीजिनवल्लभगणिभिः, अपरस्मिन्वासरे बहिर्गच्छतां प्रभूणां सोऽपि मिलितः। साक्षेपंभणितं ज्ञानदिवाकरैः श्रीजिनवल्लभ- गणिमिश्रैः। भद्र बहुदेवगर्वो न विधेयः कश्चिदेतन्मध्यात्सोऽपि भविष्यति यः त्वांबद्ध मुच्छोटयिष्यति। तच्च तथैव संजातं। प्रभुप्रसा- दात्साधारणसाधुरप्यधिकराजमान्यो बभूव, नरवर्मनृपः क्वाप्यपराधे तस्मै दुष्टमुखाय रुष्टस्तमुष्ट्रेण सह बद्धोष्ट्रमिवारटंतं धाराया- मानाययति, तत्र च केनापि प्रयोजनेन साधारणसाधुर्गतोऽभूत्ततस्तेन सकलजगत्साधारणेन साधुसाधारणेन विहितसेधनादि- निवारणेन निष्कारणेन राजानं विज्ञप्याङ्गीकृतसाधुचेष्टितेन बंधनान्मोचितोऽसौ वराको देवगृहयुग्ममपि सोत्साहैः श्रावकैः

कारयितुमारब्धं देवगुरुप्रसादात्परिपूर्णं निष्पन्नं, तत्र चोपरिष्टाच्छ्रीपार्श्वजिनभवनमधस्ताच्च श्रीभव्यानां लोचनमनोहारि समुत्तुंगशिखरतोरणस्वर्णमयदंडकलशपरंपराप्रभामंडलखंडितचंडांधकारं श्रीमहावीरजिनभवनं निर्म्मापितं, श्रीजिनवल्लभगणिवाचनाचार्यैः विस्तरेण समस्तविधिपूर्वकं चक्रे गरिष्ठा प्रतिष्ठा । सर्वत्र प्रसिद्धिर्जाता, अहो एत एव गुरव गुरव इति । अन्यदा लोकमध्ये एवंविधाः सर्वशास्त्रविदः श्वेतपटाः समाजग्मुरितिश्लाघां महतीं श्रुत्वा विप्र एको ज्योतिषिकः पंडितमानी श्रीजिनवल्लभगणिसमीपे समागतः । श्रावकैः पट्टासनं दत्तं । पृष्टोऽसौ गुरुभिर्भद्र भवतां कुत्रस्थाने वासः । कस्मिंश्चिच्छास्त्रेऽभ्यासः । विप्रः निवासस्तावदत्रैवाभ्यासस्तु सर्वेष्वपि व्याकरणकाव्यनाटकालङ्कारादिषु । वाचनाचार्याः, भवतु कुत्र विशेषेण विप्रो ज्योतिषि वाचनाचार्याः चन्द्रादित्यलग्ने सम्यग्वेत्सि, विप्रः सगर्वं किमत्रैवागणिते एकं द्वौ त्रीन् वा लग्नान् प्रतिपादयामि, ततः सगर्वं तद्वचनमुपश्रुत्य वाचनाचार्याः, शोभनं परिज्ञानं, पुनर्विप्रो युष्माकमपि किमप्यस्ति लग्नविषये परिज्ञानं, वाचनाचार्याः भविष्यति, किंचिद्विप्रः साक्षेपं तर्हि कथयंतु भवंतः । वाचनाचार्या अपि सोत्सुकमिव भो भो विप्र कथय कति कथयामि दश विंशतिं वा लग्नान् । तच्छ्रुत्वा तस्याश्चर्यमभूत्तावत्संख्यालग्नान् झटिति प्रतिपाद्य पुनर्भणितं भगवद्भिः । भो विप्र? गगनमंडले हस्तद्वयद्वयसमेघखंडं पश्यसि? बभाण ब्राह्मणः । पश्यामि, वाचनाचार्यैरुक्तं । कथय कियन्मात्रं जलं मोक्ष्यति, विप्रोऽजानानः शून्यदृष्टिर्दिशोऽवलोकयति, ततो भणितमाराध्यैः ,*शृणु भो विप्र घटिकाद्वयान्तरे तन्मेघखंडं हस्तद्वयमात्रमप्यधुना सकलगगनमंडलं व्याप्य तावद्वृष्टिं करिष्यति यावता भाजनद्वयं परिपूर्णं भविष्यति, ततश्च, तत्रैवोपविष्टस्य विप्रस्योर्ध्वमुखस्याग्रे सर्वं तथैव तज्जातं । विप्रो मस्तके हस्तौ योजयि-

* १ आहुरितिशेष । २ विप्रस्य कथनम् ।

त्वाऽहो ज्ञानमहोज्ञानमिति शिरो धुन्वन् प्रभूणां पादयोर्निपपात, भणितुं च लग्नो यावदत्र तिष्ठामि निश्चितं तावद्भवतां पादान्वंदित्वा भोजनं विधास्यामि, न मानविडंबितेन मयैवंविधा भवन्तो ज्ञाता, जाता सार्वत्रिकी प्रसिद्धिर्यदहो ज्ञानिनः श्वेतपटा एव भवं-त्यन्यदा कदाचिन्मुनिचंद्राचार्येण शिष्यद्वयं सिद्धांतवाचनानिमित्तं श्रीजिनवल्लभगणिपार्श्वे प्रेषितं। जिनवल्लभगणिरपि तयोर्वा-चनां दातुं प्रवृत्त स्तावप्यशुभं चिंतयतो यदि जिनवल्लभगणेः श्राद्धान्कथंचिद्विप्रतारयाव इति बुध्या रंजयतः श्रावकान् कदाचि-त्स्वगुरुपार्श्वे प्रेषितुं प्रच्छन्नवृत्त्या लेखोऽलेखि। तं च वाचनाकपलिकायां प्रक्षिप्य वाचनां ग्रहीतुं गतौ तौ वसतौ गणिसमीपे वंदनं दत्वोपविष्टौ यावदुच्छोटिता कपलिका ततो नूतनो लेखो दृष्ट्वा गृहीतो जिनवल्लभगणिमिश्रैरुच्छोटितश्च तावपि हस्ताद्ग्रहीतुं न शक्नुतः, ततोऽवधारितो लेखो लिखितं च तत्र, जिनवल्लभगणेः केचिच्छ्राद्धास्ते वशं नीताः संति, क्रमेण सर्वानपि वशीक-रिष्याव इति मनोवृत्तिरस्ति, अयं चार्थो विरुद्धत्वाद्यद्यपि शास्त्रोपनिबंधयोग्यो न भवति तथापि चरितोपरोधादुक्त इति ततः श्रीजिनवल्लभगणिना द्विधा विधायाभाणि यथा—

"आसीज्जनः कृतघ्नः, क्रियमाणघ्नस्तु सांप्रतं जातः॥
इति मे मनसि वितर्को, भविता लोकः कथं भविता" १॥

इति पठित्वोक्तं, अहो एवंविधाऽशुभभावयोः स्तं भवतोर्वाचनया पश्चाद्विमुखौ गतौ स्वस्थानं, पुनर्न दृष्टाविति, कदाचि-ज्जिनवल्लभगणेर्बहिर्भूमौ गच्छतः कश्चिद्विचक्षणः प्रसिद्धिं पांडित्यस्य श्रुत्वा मिलितः, समस्यापदं च प्रक्षिप्तं कस्यापि राज्ञो वर्ण-

नमाश्रित्य यथा—"कुरंगः किं भृंगो मरकतमणिः किं किमशनिः?" ततः श्रीजिनवल्लभगणिना मनाक्परिभाव्य तदैव पूरिता समस्या कथिता च तदग्रतः यथा—

"चिरं चित्रोद्याने चरसि च मुखाब्जं पिबसि च, क्षणादेणा क्षीणां विरहविषमोहं हरसि च ॥
नृप त्वं मानाद्रिं दलयसि च किं कौतुककरः, कुरंगः किं भृंगो मरकतमणिः किं किमशनिः" १ ॥

इति श्रुत्वाऽत्यंतप्रमुदितो गदितुं प्रवृत्तोऽहो निश्चितं न निर्मूला जनप्रसिद्धिः याद्दशाः श्रुतास्ताद्दशा एव यूयमिति गुणस्तुतिं कृत्वा पादयोः पतित्वा गतस्ततः सुगुरुर्वसतौ समागतः श्रावकैः पृष्टो यत्सुगुरोः किमिति वह्वी वेला लग्ना, सहगतेन शिष्येण सर्वापि कथिता वार्त्ता, जातः प्रमोदोत्फुल्लतोपेतः समस्तोऽपि श्रावकलोकः। गणदेवनामा श्रावकः स्वर्णार्थी जिनवल्लभगणिपार्श्वे सुवर्णसिद्धिरस्तीति केनाप्युक्तं चित्रकूटस्थस्य भगवतः समीपे समागत्य पर्युपासनां कर्तुमारब्धो, लक्षितस्तद्भावो गणिना। तथापि तं योग्यं ज्ञात्वा संसारवैराग्यजननी देशना दत्ता, यथाऽसावत्यंतं संविग्नो निःस्पृहो जातस्ततोऽभाणि गणिना भद्रं, किं सुवर्णसिद्धिं कथयामि। तेनोक्तं भगवन् युष्मत्पादशुश्रूषां कुर्वाणो विंशति द्रव्यनीव्या व्यवहारं कुर्वन् श्राद्धधर्मं करिष्यामि। तस्य च धर्मवर्धनलब्धिरस्ति, ततो लिखितकुलकान् लेखान्दत्त्वा शिक्षयित्वा प्रेषितो वाग्जडदेशे। कृतः सर्वोऽपि वाग्जडीयलोकः श्रीजिनवल्लभगणिप्रतिज्ञातप्रतिवंधस्तेन। श्रीजिनवल्लभगणिव्याख्याने सर्वे विचक्षणा जना उपविशंति, विशेषतो ब्राह्मणाः। स्वस्वविद्यासंदेहापोहार्थं मथ कदाचिदियं गाथा व्याख्याने समागता यथा—

"धिज्जाईण गिहीणय पासत्थाईं णवा विदठुणं ॥
जस्स न मुज्झइ दिठ्ठी अमूढदिठ्ठिं तयं बिंति" १ ॥

ततो निःशंकेन व्याख्याता यथावस्थितश्रीजिनवल्लभगणिना धिग्जातीया ब्राह्मणा, इति व्याख्यानं श्रुत्वा कुपिता विप्रा बहिर्निर्गता एकत्रमिलिताः विपक्षाश्च निकटीभूताः। आलोचितं विप्रैरेतैः सह विवादं विधायैतान्निःप्रभान् करिष्यामः॥ अथ तेषां स्वरूपं तादृशं विज्ञाय श्रीजिनवल्लभगणेर्मनसि तेभ्यो भयं समजनि उच्यते न मनागपि। किमुत्कटकरिकरटतटपातनपरिष्टनिष्ठुर-प्रकोष्टपंचाननस्य निजसिंहनादप्रतिशब्दबधिरीकृतकाननस्य कदाचित्पवनप्रेंखोलिततरुवरशिखरनिपतितपर्णमात्रात्यन्तपलाय-नसंजाताङ्गभंगेभ्यः कुरंगेभ्यः स्याद्रोमो द्वेषमात्रमपि तथा चास्मद्गुरूणां श्रीजिनपतिसूरीणामत्रैवार्थेऽन्योक्तिर्यथा

"खरनखशरकोटिस्फोटिताग्रेभकुंभ, स्थलविगलितमुक्ताराजिविभ्राजिताजिः ॥
हरिरधिगरिमा किं तर्जितो तार्जितो वा, निलचलदलपातत्वंगदंगैः कुरंगैः" १ ॥

ततो भगवता श्रीजिनवल्लभगणिना

"मर्यादाभंगभीतेरमृतरसभवा धैर्यगांभीर्ययोगान्न क्षुभ्यंते च तावन्नियमितसलिलाः सर्वदैते समुद्राः"
अहो क्षोभं व्रजेयुः क्वचिदपि समये दैवयोगात्तदानीं, न क्षोणी नाद्रिचक्रं नच रविशशिनौ सर्वमेकार्णवं स्यात् ॥१॥

इति वृत्तं भूर्जखंडे लिखित्वा विवेकिजनहस्ते दत्त्वा प्रेषितं । भणितश्चाऽसौ मिलितानां मध्ये बृहद्ब्राह्मणस्य हस्ते दातव्यं तथैव च कृतं तेन, ततो विविक्तबुद्धिना वृत्तार्थं परिभाव्य चिंतितं तेनाहो वयमेकैकविद्याधारिण

एते च सर्वविद्यानिधानाः कथं तैः सह विवादः कर्तुं शक्यते इति विचिंत्य तेन सर्वेऽपि विप्रा अहो हृदयचक्षुषा न प्रेक्षध्वं यूयं । एकैकमलिनविद्याधारिणो यूयं सर्वेऽपि, सच निखिलनिस्तुषविद्यानिधानोऽतस्तेन सह कीदृशो युष्माकं विवाद इत्यादि वचनसंदर्भेण प्रतिबोध्योपशमं नीताः, श्रीजिनवल्लभगणेः पादयोश्च पतिता इत्यन्यदा धारानगर्यां श्रीनरवर्म राजसभायां देशान्तरात्पंडितद्वयं समागतं । तेन च राज्ञा पंडितानां पुरतः पूरणार्थ प्रक्षिप्तमिदं समस्यापदं यथा "कंठे कुठारः कमठे ठकार" इति ततः पंडितैः प्रत्येकं स्वकीयस्वकीयप्रज्ञानुसारेण पूरिता परं न तयोर्मनो मुमुदे, केनापि राज्ञः पुरोऽभिहितं । देव ? न पंडितपूरिताः समस्याः प्रतिभांत्यनयोः, राज्ञोक्तं, अहोऽस्ति कश्चिदुपायो येनानयोर्मनो रज्यते, केनापि विवेकिना पुरुषेणोक्तं देव ? चित्रकूटे श्वेतपटो जिनवल्लभगणिः सर्वविद्यानिधानमाकर्ण्यते, राज्ञा तदैवोष्ट्रद्वयं शीघ्रगति सलेखं प्रेषितं लेखश्च साधुसाधारणनिमित्तं लिखितं च तत्र भोः साधारणसाधो ? यथा त्वदीयगुरुभिर्मनोहरा पूरितेयं समस्या शीघ्रं समागच्छति तथा कार्यं नान्यथेति, एवं स लेखस्तैरौष्ट्रिकैः संध्यासमये साधु साधारणहस्ते प्रदत्तः प्रतिक्रमणवेलायां साधुसाधारणेन स नृपलेखो गुरोः पुरो वाचितः, अवगतस्तदर्थो गणिभिश्चैस्ततः प्रतिक्रमणानंतरं झटिति पूरिता सा समस्या, यथा—

"रे रे नृपाःश्रीनरवर्मभूप, प्रसादनाय क्रियतां नतांगैः ॥
कंठे कुठारः कमठे ठकार, श्चक्रे यदश्वोग्रखुराग्रघातैः" १ ॥

लेखयित्वा तदैव दत्ता साधुसाधारणहस्ते तेनाप्यौष्ट्रिकपुरुषाणां हस्ते स्वकीयविज्ञप्तिकालेखसहिता सा समस्या प्रहिता तेऽपि लेखं गृहीत्वा रात्रावेव शीघ्रं धारापुर्यां संप्राप्ताः पठितास्तयोर्विदुषोः पुरतः समस्या, रंजितमतीव तया तयोर्मनः भणितं च

ताभ्यां अस्यां सभायां नास्तीदृशो विद्वान्येनेयं पूरिता किंतर्ह्यन्यः कश्चिदित्येवं प्रशंसंतौ वस्त्रादिप्रदानेन सत्कृत्य तौ प्रेषयांचक्राते नरेश्वरेण, श्रीजिनवल्लभगणिरपि भगवानुद्यतविहारकारी परमब्रह्मचारी कतिपयदिनैश्चित्रकूटाचलदुर्गा द्विजहार धारायां केनाप्युक्तं राज्ञोऽग्रे देव ? समस्यापूरकः श्वेतपटोऽत्रागतोऽस्ति, ततोऽतिशयितविद्वत्तागुणाकृष्टहृदयेनोक्तं नृपेण, भोः शीघ्रमाकारय तमत्राकारितो विनयपूर्वकराजपुरुषैः, समागतो भगवान्, प्रणतः सादरं क्षितीश्वरेण, ततो लब्धाशीर्वादेन योजितहस्तमुकुलेनाऽभिदधे धराधवेन, भो विद्वज्जनचूडामणे मनस्तुष्टये पारुत्थलक्षत्रयं ग्रामत्रयं वा गृहाण ततो भणितं श्रीजिनवल्लभगणिवाचनाचार्यैः । महाराज ? व्रतिनां निषिद्धोऽर्थसंग्रहोऽस्मदागमे विशेषतः । तथाचागमः—"दोससयमूलजालं०" १ ॥ इत्यादि । अतो वयं नार्थं हस्तेनापि स्पृशामः । राजा पादयोर्निपत्य प्राह, भो महात्मन् निस्पृहशिरोमणे । तथापि लक्षत्रयस्य ग्रहणमंतरेण मम मनः समाधिर्नास्त्यतो यथा तथा मन्मनः समाधिरुत्पादनीयः । वाचनाचार्यैरुक्तं, यद्यत्रार्थे महाराजस्य, महानाग्रहस्तर्हि चित्रकूटे श्रावकैर्देवगृहद्वयं कारितमस्ति, तत्र पूजार्थं स्वमंडपिकादानात्पारुत्थलक्षद्वयं दापयत, ततो राजा तुष्टः शाश्वतम् दानं भविष्यतीति तथैव चकार, तथा श्रीजिनवल्लभगणेर्धार्म्मिकत्वेन सर्वत्र प्रसिद्धिर्जज्ञे, ततश्च श्रीनागपुरे श्रावकैर्देवगृहं नेमिनाथबिंबं च नूतनं कारितमस्ति, तेषा मेपबभूवाभिप्रायो यदुत वयं महाचारित्रिणः श्रीजिनवल्लभगणिं गुरुत्वेनाभ्युपेत्य तस्य हस्तेनोभयोः प्रतिष्ठां कारयिष्याम इति चिंतयित्वा सर्वसम्मतेन महदादरेण महता बहुमानेनाकारितो भगवान् श्रीजिनवल्लभगणिः, ततः पूज्यैः शुभलग्ने देवगृहं नेमिनाथबिंबं च प्रतिष्ठितं, तत्पद्महस्तप्रभावाल्लक्षपतयस्ते श्रावका जज्ञिरे

१ द्रव्यम् । २ मरोटग्राम भापायाम् प्रसिद्ध. ।

नेमिनाथबिंबे रत्नमयानि मुकुटतिलककुंडलांगद श्रीवत्सकंठमणिमालिकाद्याभरणानि कारयांचक्रिरे, तथा नरवरपुरीयश्रावकाणां तथाऽभिप्रायो यतो वयमपि श्रीजिनवल्लभगणिं गुरुत्वेनाङ्गीकृत्य देवगृहबिंबयोः प्रतिष्ठां विधापयाम इतिपर्यालोच्य तथैव कारयामासुः उभयोरपि जिनगृहयो रात्रिबलिधारणरात्रिस्त्रीप्रवेशन रात्रिप्रतिष्ठाकरणवारणादिको मुक्तिसाधको विधिर्लिखितः ततो मरुकोटीयश्रावकैः श्रीजिनवल्लभगणिवाचनाचार्याविहारक्रमाय समाहूता विक्रमपुरमध्येन मेरुकोट्टे विहृतास्तत्र श्राद्धैः श्रद्धावद्भिर्गुप्तिस्थानादियुक्ता दत्तावसतिः । स्थितास्तस्यां । श्रावकैरुक्तं, भगवन् ? युष्मद्वदनारविंदाज्जिनवचनरस मास्वादयितुमिच्छामः प्रभुभिरभाणि युक्तमेतच्छ्रावकाणां तर्ह्युपदेशमाला कथयितुमारभ्यते, तैरुक्तं पूर्वमेव श्रुता । पूज्यैर्भणितं भूयोऽपि श्रूयतां । भव्यदिने व्याख्यातुमारब्धोपदेशमाला, संवत्सरमुसभजिणो इत्येकस्या अपि गाथाया व्याख्याने षण्मासावधिः कालो लग्नस्तथापि श्रावकाणां नानासिद्धान्तोदाहरणामृतेन तृप्ति र्नजाता भणितुमारब्धाः, श्रीभगवन्तस्तीर्थंकरा एवैवं वचनामृतेन श्रोत्रसुखमुत्पादयितुं समर्थाः सत्यंतीर्थंकरप्रतिरूपा यूयं कथमन्यथेदृश्यमृतस्राविणी वाणी ईदृशी च व्याख्यान लब्धिरिति भृशं संतुष्टा देशनया श्रावकाः । अन्यदा कदाचिच्चैत्यगृहे व्याख्यानं विधाय श्राद्धैः सह वसतौ समागच्छंतः संति, एतस्मिन्प्रस्तावे पुरुष एकोऽश्वारूढः स्त्रीभिर्गीयमानो बहुपरिवारः परिणयनाय गच्छन्नवलोकितस्ततः सविषादं श्रीजिनवल्लभगणिना संविग्नशिरोमणिना ज्ञानदिवाकरेणोक्तं, अहो पश्यत कीदृशी क्षणदृष्टनष्टता संसारस्य येनैता याः स्त्रियो विकसितवदनकमला गायंत्यो गच्छंति ता एव वक्षःस्थलं ताडयंत्यो महाक्रंदं कुर्वत्य एतेनैव पथा व्याघुटिष्यंते गता वसतौ प्रभवः स च परिणेता तत्र प्राप्तः निःश्रेण्या चटितुमारब्धः आरोहतश्च स्खलितपादः पतितश्चासौ घरट्टोपरि घरट्टकीलकेन तस्योदरं द्विधा जातं मृतश्च ततस्ताः स्त्रि-

यस्तथाभूता आगच्छंत्यस्तेनैव मार्गेण दृष्टाः श्राद्धसमुदायेन समस्तेनाहो परिज्ञानं सुगुरूणामिति गदितुं प्रवृत्तश्च सर्वः श्रावकलोकः एवं श्रावकाणां धर्मपरिणाममुत्पाद्य पुनर्नागपुरेविहारं चक्रुः श्रीजिनवल्लभगणयः । अत्रान्तरे श्रीदेवभद्राचार्या विहारक्रमं कुर्वाणाः श्रीअणहिल्लपत्तने समायातास्तत्रागतैश्चिंतितं प्रसन्नचंद्राचार्येण पर्यंतसमये ममाग्रे भणितं भवता जिनवल्लभगणिः श्रीअभयदेवसूरिपदे निवेशनीयः, स च प्रस्तावोऽधुना वर्त्तते, ततः श्रीनागपुरे श्रीजिनवल्लभगणये विस्तरेण लेखः प्रेषितस्त्वया शीघ्रं समुदायेन सह चित्रकूटे विहर्त्तव्यं येन वयमागत्य चिंतितप्रयोजनं कुर्म स्ततः समागताश्चित्रकूटे श्रीजिनवल्लभगणयस्तथा श्रीदेवभद्राचार्या अपि सपरिवाराः पण्डितसोमचंद्रोप्याकारितः परं नागंतु शक्तोऽभूत्ततो महता विस्तरेण श्रीदेवभद्राचार्यैः श्रीअभयदेवसूरिपदे श्रीजिनवल्लभगणिः संस्थापितः, अनेको भव्यलोकः श्रीजिनवल्लभसूरीन् युगप्रधानश्रीमदभयदेवसूरिपादभक्तान् समालोक्य मोक्षमार्गे प्रवृत्तः देवभद्राचार्यादयस्तु पदस्थापनां कृत्वा कृतकृत्यमात्मानं मन्यमानाः श्रीअणहिल्लपाटकादिस्थानेषु विहारं चक्रिरे, श्रीजिनवल्लभसूरिभिस्तु स्वायुः प्रमाणं गणितं यावत् षड्वर्षाण्यद्याप्यायुरस्तीत्यागतं ततश्चिंतितमेतावता कालेन प्रभूतभव्यलोकप्रतिबोधं करिष्याम, इत्येवं सुस्थितानां तेषांते षण्मासाअतिक्रमेऽकस्मादेहमस्वस्थं जातं किमेतद्यावत्पुनर्निरूपणं निरूपयंति, तावदंकोच्छिष्टं ज्ञातं, षण्मासानां स्थाने षड्वर्षाण्यागतानि, तत एतावदेवायुरिति निश्चित्य ते महाशयाः समस्तसंघेन सार्द्धं दत्तमिथ्यादुष्कृताः प्रतिपन्नचतुःशरणा विहित सर्वसत्वक्षामणाः दिनत्रितयमनशनं विधाय सप्तषष्ठ्युत्तरैकादशशत संवत्सरे ११६७ कार्त्तिककृष्णद्वादश्यां रजनीचरमयामे पंचपरमेष्ठिपरावर्त्तनं कुर्वतः श्रीजिनवल्लभसूरयो महात्मानश्चतुर्थदेवलोकं संप्राप्ताः परमद्यापि येषां भगवतामवदातचरितनिधीनां श्रीमरुकोट्टसप्तवर्ष प्रमितकृतनिवासपरिशीलितसमस्तागमानां समग्रगच्छाद्दतसू-

क्ष्मार्थसिद्धांतविचारसारषडशीतिसार्द्धशतकाख्यकर्मग्रथपिंडविशुद्धिपौषधविधि प्रतिक्रमणसमाचारीसंघपट्टकधर्मशिक्षाद्वादशकुलकरूपप्रकरणप्रश्नोत्तरशतकशृंगारशतकनानाप्रकारविचित्रचित्रकाव्यसारशतसंख्यस्तुतिस्तोत्रादिरूपकीर्त्तिपताका सकलंमहीमंडलं मंडयंती विद्वज्जनमनांसि मोदयति ॥ अधुना पूर्वाचार्याम्नाय प्रतिपादनप्रसंगादद्भुतनिधानानां श्रीजिनदत्तसूरीणामेतत्प्रकरणकाराणां यथाश्रुति, यथास्मृति, किंचिच्चरितमुत्कीर्त्यते, तथाहि—किल पूर्वं श्रीजिनेश्वरसूरिसत्कश्रीधर्मदेवोपाध्यायस्य संयतीभिर्गीतार्थाभिर्धवलके चतुर्मासी कृतासीत्तत्र च क्षपणकभक्तवांछिगश्रावकपत्नी वाहडदेवीति नाम्ना पुत्रसहिता तासां साध्वीनां पार्श्वे धर्मं श्रोतुं समागच्छति। ता अपि तस्या विशेषेण धर्मकथादिकं कथयंति, पुरुषलक्षणं शुभाशुभं च ता गुरूपदेशाद्विदंति, तस्याः पुत्रस्य प्रधानलक्षणानि पश्यंति, तल्लाभनिमित्तं च तन्मातरंब्रह्मा क्षिपन्तिकिम् बहुना तथाक्षिप्ता यथा साकथितकारिणी जाता। ततो भणितार्यिकाभिर्धर्मशीले एष त्वदीयपुत्रो विशिष्टयुगप्रधानलक्षणधरस्तदेनं यद्यस्मद्गुरूणां प्रयच्छसि, तदा तव महाधर्मो भवति, किंचैष समस्तजगन्मुकुटभूतो भविष्यति, तयापि प्रतिपन्नं। ततश्चतुर्मास्यनंतरं श्रीधर्मदेवोपाध्यानां स्वरूपं दत्तं, यदस्माभिरत्र रत्नमेकं प्राप्तमस्ति, यदि युष्माकं प्रतिभास्यति, ततः शीघ्रं समागताः श्रीधर्मदेवोपाध्याया दृष्टश्चासौ ज्ञातं च निश्चितं न सामान्यपुरुष एष किंतर्हि गुरुतरपदयोग्यो भविष्यति, तन्माता पृष्टा तव सम्मतं यद्येष दीक्ष्यते, तयोक्तं पुण्यपात्रया, भगवन्प्रसादं कृत्वा कुरुतैवं येन ममापि निस्तारो भवति, पुनः पृष्टोपाध्यायैः, कियद्वर्षप्रमाणोऽयं, तयोक्तं एकादशशतद्वात्रिंशत्संवत्सरे ११३२ जात इति, तत एकादशशतैकचत्वारिंशत्संवत्सरे ११४१ शुभलग्ने तस्योपाध्यायैर्दीक्षा प्रदत्ता, नाम च कृतं सोमचंद्र इति भणितं उपाध्यायैः सर्वदेवगणिस्त्वया प्रतिपाल्य एषः सर्वं बहिर्भूमिनयनादिकं कार्यमस्य क्रियाकलापश्च शिक्षणीय इति, सूत्रादिपाठस्तेन पूर्वं स्वगृहस्थितेनैव

कृतोऽस्ति,। "करे मिभंते सामाइयं" इत्यादिपाठ्यते प्रथमव्रतदिन एवासौ सोमचंद्रमुनि नीतोऽस्ति, बहिर्भूमौ सर्वदेवगणिना, अज्ञानत्वादुद्गतक्षेत्राणि तेन त्रोटितानि, ततः शिक्षानिमित्तं रजोहरणं मुखवस्त्रिका च गृहीता सर्वदेवगणिना भणितश्च व्रते गृहीते किं क्षेत्राणि त्रोट्यंते तद्गच्छ स्वगृहं। ततस्तदेवोत्पन्नप्रातिभेन तेनोक्तंयुक्तं कृतंगणिना परं मम चोटिका आसीत्तां दापय येन गच्छामीत्युक्ते, गणेराश्चर्यमभूदहो लघोरपि कीदृगुत्तरत्वमेतस्य किं संप्रतिवचनं दीयते, एषा वार्त्ता धर्मदेवोपाध्यायस्याग्रे जाता, धर्मदेवोपाध्यायैश्चिंतितं भविष्यति योग्य एषः, सर्वत्र पत्तने परिभ्रम्य लक्षणपंजिकादिशास्त्राणि भणितुमारब्धः सोमचंद्रः, एवं च भावडाचार्यधर्मशालायां पंजिकाभणनार्थमेकदा गच्छन्नुद्धतेन केनापि प्रतिपादितो यथाऽहोशितपटाः कपलिकाग्रहणं किमर्थं। सोमचंद्रेणोक्तं त्वदीयमुखचूरणार्थमात्मीय मुखमंडनार्थं च। गतोऽसौ निरुत्तरो न किमपि वक्तुं शकितो भणनस्थाने गत स्तत्रानेकेऽधिकारिपुत्राः पंजिकां भणंति, कदाचित्तेनाऽऽचार्येण परीक्षार्थं पृष्टो भोः सोमचंद्र ? न विद्यते वकारो यत्र स नवकार इति यथार्थनाम, प्रतिभावता प्रोक्तं, झटिति सोमचंद्रेण, मैवमावेदयंत्वाचार्याः। किंतर्हि नवकरणं नवकार इति व्युत्पत्तिः कार्या, आचार्येण ज्ञातमहोऽत्यंत सदुत्तर एष, अनेन सह वक्तुं न शक्यते, अन्यथा लोचदिने व्याख्यानभणनाय न गतो व्याख्यानव्यवस्था चेदृशी, यद्येकोऽपि छात्रो नागच्छति तदा व्याख्यानं न भणत्याचार्य इति ततो व्याख्यानमभणत्याचार्ये सगर्वैर्भणितमधिकारिपुत्रैराचार्यमिश्राः सोमचन्द्रस्य स्थाने एष पाषाणो धृतो, भणत यूयं व्याख्यानं ततस्तदुपरोधेन भणितं व्याख्यानं, द्वितीयदिने समागतः सोमचंद्रः पप्रच्छ छात्रान्व्यतीतेऽह्नि किं मां विना भणितं युष्माभिस्तैरुक्तं त्वदीयस्थाने पाषाणो धृतः, सोमचंद्रेणोक्तं कश्चित्पाषाणः कश्चिन्नेत्यधुनैव ज्ञास्यते, यावती पंजिका भणिता तावती मां पृच्छंत्वेतानपि यथार्थं यो

न व्याख्यास्यति स एव पाषाणः, आचार्येणोक्तं भोः सोमचंद्र ! त्वां प्रज्ञादिसौरभगुणाढ्यां कस्तुरिकां जानाम्येव परमेतैर्मूर्खैः प्रेरितोऽहं व्याख्यानेऽतः क्षंतव्यं भवता । एवं पंजिकां स पपाठ, अशोकचंद्राचार्येणोपस्थापना कृता हरिसिंहाचार्येण सर्वसिद्धांत-वाचना दत्ता पण्डितसोमचंद्राय तथा मंत्रपुस्तिका । यया सिद्धांतवाचना स्वयं गृहीता सा कपलिका च भगवता तुष्टेन दत्ता तथा देवभद्राचार्येणापि तुष्टेन काष्टोत्किरणं दत्तं, येन महावीरचरितपार्श्वचरितादिकचत्वारिकथाशास्त्राणि पट्टिकायां लिखितानि, एवं च पण्डित सोमचंद्रगणिः ज्ञानीध्यानी सैद्धांतिकः सर्वजनमनोहारी श्रावकाणां मानसाह्लादकारी साध्वा-चारेण ग्रामानुग्रामं विहरतीति ॥ इतश्च श्रीदेवभद्राचार्यैः श्रुतं जिनवल्लभसूरीणां देवलोकगमनं । चिन्ता समुत्पन्नाऽतीवचित्तसंतापो जातोऽहो सुगुरूणां पदमुद्द्योतितमभूत्परं विघटितं । पश्चाद्देवभद्राचार्याणामीदृशं चित्तं जातं, यदि श्रीजिनवल्लभसूरियुगप्रधानपदं योग्यस्थापनेन नाद्रियते, तदा का भक्तिस्ततश्चिंतितमाचार्यैरस्तिवांछेकस्तत्पदयोग्य इति चिंतयतां चित्ते पण्डितसोमचंद्रगणि-र्लेखो, निश्चितमेष एव योग्यः । श्रावकाणां ज्ञानध्यानक्रियापरत्वेनानन्दकारी पश्चात्सर्वसम्मतेन पण्डितसोमचंद्राय लेखः प्र-दत्तो, यच्चित्रकूटे शीघ्रं समागंतव्यं । येन श्रीजिनवल्लभसूरिपदस्थापना भविष्यति, न ज्ञायते कश्चिदुपवेक्षति । श्रीजिनवल्लभसूरिपद-प्रतिष्ठायामपि नागतोऽभूः त्वं बहवश्च तत्पदे स्थातुं लंबकर्णाः, गौरवर्णाः, श्रीपर्णपर्णाक्षाः, साक्षादिव मकरध्वजा गुर्जरत्राः सं-जाताः संयता अभ्युद्यता आसन्परं योग्यतां एव गुरवो विदंति । किंबहुना देवभद्राचार्याः पंडितसोमचंद्रोऽन्येपि साधवश्चित्रकूटे समाजग्मुः, सर्वोऽपि लोको वेत्ति, सामान्येन श्रीजिनवल्लभसूरिपदस्थापनं भविष्यति न ज्ञायते कश्चिदुपवेक्ष्यति श्रीजिनवल्लभसूरि-

१ तेषामिति शेष. ।

प्रतिष्ठिते साधारणसाधुकारिते श्रीमहावीरचैत्ये पदस्थापनं भविष्यति, ततः स्वपरिभावितलग्नदिनादर्वाग्दिने श्रीदेवभद्राचार्यैरेकांते भणितः पंडितसोमचंद्रगणिर्यदुतास्मिन्दिने युष्मदीयं पदस्थापनालग्नं परिभावितमस्ति, पंडितसोमचंद्रेणोक्तं, यद्युष्माकं संगतं तद्युक्तं। परं यद्यप्यस्मिल्लग्ने स्थापयिष्यथ तदा न चिरायजीवितं भविष्यति। षण्णां दिनानामुपरि शनैश्चरवासरे यल्लग्नं भविष्यति, तत्रोपविष्टानां त्वस्माकं चतुर्दिक्षु विहरतां चतुर्विधः श्रीश्रमणसंघः श्रीजिनवल्लभसूरिवचनेन प्रभूतो भवति चिरजीवित्वं च, श्रीदेवभद्राचार्यैरुक्तमेतदेव वयमपि गवेषयामहे। तदपि लग्नं न दूरे भवतु ततः तस्मिन्नेव दिने श्रीजिनवल्लभसूरिपदे विस्तरेण संध्यासमयलग्नवेलायां संस्थापिताः श्रीजिनदत्तसूरिनामानो युगप्रवराः। ततो वादित्रैर्वाद्यमानैः समागता वसतौ। प्रतिक्रमणानंतरं वंदनकं दत्त्वा श्रीदेवसूरिभिर्भणितं देशनां कुरुत, ततः सिद्धांतोक्तोदाहरणानुसारिहारिसुधासारनिकरणिगीर्वाणवाणीप्रबंधेन तथा कृता पूज्यैः श्रीजिनदत्तसूरिभिः देशना। यथा ह्रस्वशरीरः श्यामवर्णोयं किमित्युपविशति किं न संत्यन्ये गौरवर्णा लंबकर्णा विशाललोचना गच्छमध्ये साधव इत्यादिकालुष्यमपहाय सर्वा प्रजा रंजिता सती भणति, अहो सिंहानां पदे सिंह एवोपविष्टो विराजते, धन्याः श्रीदेवभद्राचार्या, यैरीदृशं पात्ररत्नं परीक्षितं। किमस्मादृशाः स्थूलमतय आप्तलक्षणानि जानंति, अन्यस्मिन्दिने विज्ञप्ताः श्रीजिनदत्तसूरयः श्रीदेवभद्राचार्यैर्यद् कतिपयदिनानंतरं कतिचिद्दिनानि श्रीपत्तनाद्बहिर्विहर्त्तव्यं। श्रीजिनदत्तसूरिभिरुक्तमेवं विधास्यामः अपरदिने जिनशेखरेण साधुविषये किंचित्कलहादिकमयुक्तं कृतं। ततो देवभद्राचार्यैर्गलके गृहीत्वा निष्कासितस्ततो यत्र श्रीजिनदत्तसूरयो बहिर्गच्छंति तत्र गत्वा स्थितस्तत्रागतानां पूज्यानांपादयोर्लगित्वा दीनवागवादीत्। प्रभो? मदीयोऽयमन्याय एकवारं क्षंतव्यो। न पुनः करिष्यामि, ततः कृपोदधयः श्रीजिनदत्तसूरयः तं प्रवेशयामासुः पश्चाद्देवभद्राचार्य-

रुक्तं, युष्माभिर्न युक्तं कृतं, एष दुरात्मा भवतां सुखावहो न भविष्यति, पामनोष्ट्रस्येवैतस्य बहिर्निष्कासनमेव श्रेयः, पूज्यैरुक्तं, श्रीजिनवल्लभसूरिपृष्ठे लग्नोऽयं, यावदमुं वर्त्तयितुं शक्यते तावदनुवर्त्त्यते ॥ श्रीदेवभद्राचार्यादयोऽन्यत्र विहारं चक्रुः, कालेन स्वःपदं संप्रापुरिति ॥ श्रीजिनदत्तसूरिभिरपि श्रीपत्तनाद्विजिहीर्षुभिः श्रीदेवगुरुस्मरणार्थमुपवासत्रयं चक्रे, ततो देवलोकाच्छ्रीहरिसिंहाचार्य आगतः । किमर्थं स्मृतोऽहमित्युवाच । श्रीजिनदत्तसूरिभिरुक्तं, कुत्र विहराम इति हेतुना । ततो मरुस्थलादिषु विहर्त्तव्यमित्युपदेशं दत्त्वा गतोऽदर्शनं श्रीहरिसिंहाचार्यः यावत्तत्रैव तिष्ठंति पूज्या लब्धोपदेशास्तावन्मरुस्थली वास्तव्या मेहरभाषरवासलभरतादयः श्रावका व्यवहारेण तत्र संप्राप्तास्तत्र श्रीजिनदत्तसूरिगुरुं दृष्ट्वा वचनं च श्रुत्वाऽतीव तुष्टाः श्रीजिनदत्तसूरीन्गुरुत्वेन प्रतिपन्नः भरतः सुगुरुपार्श्वेवाचकत्वेन स्थित अन्ये तु मेहरभाषरादयः स्वस्थाने गताः, स्वकुटुंबाग्रतः प्रभुवर्णनं कुर्वंति एवंविधा शुद्धचारित्रिणः श्रीजिनदत्तसूरय इत्यादि । एवं तत्रदेशे प्रवेशो जातस्ततो नागपुरे विहृतास्तत्र श्रावकधनदेवः श्रेष्ठी प्रतिपत्तिं करोति, श्रुत्वाऽऽयत नानायतनादिविचारं, भणितं धनदेवेन भो आचार्य ? यदि मद्भणितं करोषि, तदा सर्वोऽपि श्रावकवर्गस्त्वत्पृष्ठलग्नः परिवारभूतो भवति पूज्यैः किलाजानानैरिवाभिहितं । धनदेवश्रेष्ठिन् ? किंतत्, धनदेव उवाच, आयतनमनायतनं विधिमविधिं चैव सर्वविषयेऽपि नोचेत्कथयसि लगयामि मेदिनीं तत्र पृष्टे तदाकर्ण्योक्तं श्रीपूज्यैः धनदेव ।

तावकीनं, वचनं कुर्मो उत नु तीर्थंकृतां ॥ "यदनायतनं सूत्रे, भणितं तद्ब्रूमहे नियतं" १ ॥
उत्सूत्र भाषणात्पुनरनन्त संसारकारणात् बहुशः किं लोकेन त्वग्गरोगिणो भवेत् प्रचुरमक्षिकासंग २

किंच—

"मैवं मंस्था बहुपरि करो जनो जगति पूज्यतां याति ॥

येन बहुतनययुक्ता पि शूकरी गूथमश्नाति" ॥ ३ ॥

तद्वचनमतीवकर्णकटुकं दुःखदमभूद्धनदेवस्य भवतु तथापि गुरुणा युक्तमेव वक्तव्यं, यतः—

"रुशउवापरोमावा विसं वापरियत्त उभासि अव्वाहियाभासा सपक्ख गुणकारिआ" १ ॥

इति सिद्धांतप्रामाण्यात्केषांचिद्विवेकिनां पुनस्तद्वचनं रुचितं । ततो नागपुरादजयमेरौ विहृतास्तत्र च आशाधरसाधारणरास-
लप्रभृति श्रावकाः संति, श्रीजिनदत्तसूरयो देववंदनार्थं बाहडदेवगृहे गच्छंति, अन्यदा तत्राद्य आचार्य आगतः स च पर्यायेण
लघुरपि चैत्ये देववंदनार्थं गतानां गुरूणां व्यवहारं न करोति, ततः, ठक्कुरआशाधरप्रभृति श्रावकैरुक्तं, किमत्रागच्छतां फलं
"यदि युक्तं न प्रवर्त्तते, ततो वंदनादिव्यवहारो निवृत्तस्ततः श्रावकैर्विज्ञप्तोऽर्णोराजः देवास्माकं श्रीजिनदत्तसूरिगुरवः समागताः
संति, राज्ञोक्तं भद्रं, यद्यागताः कार्यं कथयत, श्रावकैरुक्तं देव ! भूमिखंडमेकमालोक्यते यत्र देवगृहादिधर्मस्थानानि श्रावकाणां
स्वकुटुंबसदनानि च संपाद्यंते । पश्चादर्णोराजेनोक्तं, दक्षिणदिग्भागे यः पर्वतस्तस्मिन् स्थले च यद्देवगृहादिकं रोचते तन्निःशंकं
कुरुत, आत्मीयगुरवश्च मम दर्शनीयाः । एतत्स्वरूपं प्रभूणामग्रे श्रावका अचीकथन्। प्रभुभिः परिभाव्य भाषितं, भो य एवमस्-
दर्शनोत्कंठितो नरेन्द्रस्तस्मिन्नाकारिते गुणएव स्यात्ततो गुरुवचनमनुकूलयद्भिः श्रावकैर्भव्यवासरे समाहूतोऽर्णो राजा आगतः
क्षिप्रमेव नमस्कृताः श्रीजिनदत्तसूरयः" अभिनंदित आशीर्वादेन प्रभुभिस्तथा चाशीर्वादः

"विश्व विश्व विनिर्म्माणस्थितिप्रलयहेतवः ॥ संतु राजेन्द्रभूत्यै ते ब्रह्मश्रीपतिशंकराः" १ ॥

तथा—

"नीतिश्चित्ते वसति नितरां लब्धविश्रांतिरुच्चैः श्रीरस्याङ्के भुजयुगलमप्याश्रिता विक्रमश्रीः ॥
एषोऽत्यर्थं क्षिपति बहुभिर्लोकवाक्यैः प्रियो मामित्यर्णोराड् भ्रमति भुवनं कीर्त्तिरस्ताश्रयाते" २ ॥

इत्यादि सद्गुरुमुखकमलविनिर्गतां भारतीमाकर्ण्य तुष्टो राजा बभाषे सदैवात्र तिष्ठंतु सुगुरवः गुरुभिरुक्तं, युक्तमुक्तं महाराजेन, परमस्मदीया स्थितिरेषा यत्सर्वत्र विहारक्रमः क्रियते लोकोपकाराय, अत्र पुनः पुनरागमिष्यामो यथा युष्माकं समाधानं भविष्यति तथा विधास्यामः, ततस्तत्समाधानेनोत्थितो राजा ततः, ठक्कुरआशाधरो भणितः पूज्यैर्यथा—

"इदमन्तरमुपकृताय प्रकृतिचलाया वदस्ति संपदियं ॥
विपदि नियतो दयायां, पुनरुपकर्तुं कुतोऽवसरः" १ ॥

अतस्तंभनक शत्रुंजयोज्जयंतकल्पनया पार्श्वनाथऋषभनाथनेमिनाथबिंबस्थानानि परिभावनीयानि। उपर्यंबिकादेवकुलिका तले च गणधरादिस्थानं चिंतनीयमित्यभिधाय श्रीपूज्यैर्वागडदेशे सुशकुनेन कृतो विहारस्तत्रत्यलोकाश्च श्रीजिनवल्लभसूरिविषये प्रागेव समाहितचेतसोऽभूवन्, तन्नामग्रहणेऽपि नमनशीलास्तेषां देवलोकगमनवार्त्तामाकर्ण्य तेषां पदे ये संस्थापितास्ते ज्ञानध्यानगुणोपेता श्रीमहावीरवदनारविंदविनिर्गतार्थश्रीसुधर्मस्वामिगणधररचितसिद्धांतवेदिनः। श्रीजिनदत्तसूरिनामानः सुगुरवो युगप्रधानास्तीर्थंकरकल्पा अत्रास्मद्देशे विहृतास्संतीति चोपश्रुत्य हृष्टा दर्शनोत्कंठितास्तत्पादांभोजवंदनार्थमायातास्ततः श्रीपूज्यदे-

शनां श्रुत्वा दृष्ट्वा च सौम्यतामत्यंतमानंदिताः संजाताः । यद्यच्चे श्रावकाः पृच्छंति । तत्तत्कथयंतः केवलिन इव श्रीजिनदत्तसूरयस्तेषां मनःसमाधानमुत्पादयंति, केचन सम्यक्त्वं, केचन देशविरतिं, केचन सर्वविरतिं, तुष्टाः संतुष्टाः संतस्ते गृह्णन्त्येवं च पूज्यैस्तत्र व्रतिनो बहवः कृता व्रतिन्यश्च, तस्मिन्प्रस्तावे द्विपंचाशत्कृताः श्रूयंते, तस्मिन्नेव प्रस्तावे जिनशेखरमुपाध्यायं कृत्वा कतिचित्साधुसहितं रुद्रपल्यां विहारक्रमेण प्रेषयांचक्रुः । सच तपः करोति, स्वजनास्तत्र संति तेषां समाधानहेतोः तथेदं स्वरूपंजयदेवाचार्यैः स्वस्थानस्थितैः श्रुतं। यच्छ्रीजिनवल्लभसूरिपदजिनदत्तसूरयः सर्वगुणोपेता प्रतिष्ठिता अत्र देशे विहारेणायाता इति, ततश्चिंतितं तैः शोभनं संजातं, श्रीजिनवल्लभगणेश्चैत्यवासपरिहारेण श्रीअभयदेवसूरिपार्श्वे वसतिवासप्रतिपत्तिं कृतां श्रुत्वा प्रागेवास्माकं वसतिवासाभिप्राय उत्पन्न आसीदिदानीं गत्वा दृश्यंते ते सुगुरवस्ततस्ते सपरिवारा वंदनार्थं समागताः । वंदिताः सविनयं श्रीजिनदत्तसूरयस्तैश्च तथा संभाषिताः सिद्धांतमधुरवचनैर्यथैवं परिणामोऽभूद्यदुत, एते एव भवे भवेऽस्माकं गुरवो भूयासुः, पश्चाद्द्वन्यदिने उपसंपदं गृहीतवंतः श्रीजयदेवाचार्याः पश्चान्नावलोकिताः सनत्कुमारचक्रिवत्तथा श्रीजिनप्रभाचार्याः केवलिकपरिज्ञानेन सर्वजनप्रसिद्धास्ते च तुरुष्कभूम्यां गताः । केनचित्तुरुष्कनायकेन ज्ञानिनो ज्ञात्वा पृष्टा, यथा मदीयहस्ते किमस्ति, आचार्यैर्गणयित्वा कथितं वदामः, खटिकाखंडवालश्च सच वालं न जानाति, ततस्तेन विस्मितेन दर्शितो हस्तो यावद्वालोऽपि खटिकायां लग्नोऽस्ति, तुरुष्काधिपस्तुष्ट, आचार्यहस्तं गृहीत्वा चुंबितवान्, चंगाचंगेत्युक्तवांश्च, आचार्येण ज्ञातमेष मामात्मनासह नेष्यति, दुष्टाभिसंधयश्चैते यदा कदाचिदनर्थमपि कंचन मम संपादयिष्यंतीति। रात्रौ प्रपलाय्य स्वदेशे गतः ।तत्रागतो जयदेवाचार्यं वसतिमार्गप्रतिपत्तारं निरीक्ष्य श्रीजिनदत्तसूरिपार्श्वे श्रुत्वा तस्याप्यभिप्राय उत्पन्नोऽहमपि चैत्यवासं परित्यजामि परमतीव गाढो मार्ग एतेषां

श्रूयते, यदि कश्चित्सुकुमारतरो धर्ममार्गः स्यादिति केवलिकापरिज्ञानेन चिंतयति, यावत्प्रथमवेलायां श्रीजिनदत्तसूरय इति नामागतं तताश्चिंतितं मा कथंचिदंक व्यत्ययो जातो भविष्यति, द्वितीयवेलायां गणयति, यावत्तथैव श्रीजिनदत्तसूरय इति नामागच्छति, पुनर्निश्चयाय यावत्तृतीयवेलायामपि गणयितुमारब्धस्ततोऽग्निपुंजो गगनात्पतित आकाशे वाणी चोत्थिता, यदि शुद्धमार्गेण तव प्रयोजनं तत्किमिति बहुधा गणयसि, अयमेव संसारनिस्तारकः शुद्धमार्गप्ररूपकः सुगुरुरिति, ततोऽसौ निस्संदेहः सन् श्रीजिनदत्तसूरिपार्श्वे समागतस्ततो ज्ञानादित्येन भणितस्तव चूडामणिपरिज्ञानमस्मत्समीपे न परिस्फुरिष्यति। तेनोक्तं मा स्फुरतु मम विधिमार्गेण प्रयोजनमित्युक्ते दत्ता तस्य स्वकीयोपसंपत्तिस्ततः सुगुर्वाज्ञया विजहार, तथा तत्रैवंस्थितानां श्रीजिनदत्तसूरीणामतिशयज्ञानिनां पार्श्वे विमलचंद्रगणिनामा चैत्यवासी जयदेवाचार्यजिनप्रभाचार्ययोर्वसतिवासप्रतिपत्तिं श्रुत्वा वसतिवासमङ्गीचकार, तथा तस्मिन्नेव प्रस्तावे जिनरक्षितशालिभद्रौ मात्रासह प्रव्रजितौ, तथा स्थिरचंद्रवरदत्तनामानौ भ्रातरौ प्रव्रजितौ, तथा जयदत्तनामा मुनिर्मंत्रवादी बभूव, तस्य च पूर्वजा मंत्रशक्तियुक्ता आसंस्ते च सर्वेऽपि रुष्टया दुःसाधितदुष्टदेवतया विनाशिताः। एष पुनर्नष्टः श्रीजिनदत्तसूरीणां शरणंगतो व्रतं जग्राह, ततः श्रीपूज्यैः शक्तिनिधानैः करुणानिधानैः, दुष्टदेवतातो रक्षितः तथा गुणचंद्रगणिनामा यतिः सोऽपि श्रीजिनदत्तसूरिभिर्दीक्षितः स हि पूर्वंश्रावकः संस्तुरुष्कैर्हस्तदर्शनेन चंगो भांडागारिको भविष्यतीति ज्ञात्वा [2]नाशनभयाच्छृंखलया दृढं निबद्धस्तेन च भावनया नमस्कारलक्षं गुणितं, तत्प्रभावाच्छृंखला स्वयमेव त्रुटिता ततोऽलक्षितो निःसृत्य रजनी पश्चिमार्द्धे कस्याश्चिद्वृद्धाया गृहे प्रविष्टस्तया च कृपया कोष्टिकामध्ये प्रक्षिप्तस्तु-

१ शकुनावधारणेन। २ पलायन भयात्।

रुष्कैः प्रेक्षितोऽपि न लब्धस्ततो रात्रौ निर्गत्य स्वदेशे गतः, एवं च तेन जातसंवेगेन प्रभूणां पार्श्वे व्रतं गृहीतमिति, तथा च रामचंद्रगणिःजीवानंदपुत्रसहितोऽन्यगच्छाद्धव्यं धर्मं ज्ञात्वा श्रीजिनदत्तसूरीणामाज्ञां प्रतिपन्नस्तथा ब्रह्मचंद्रगणिर्व्रतमाददे, एतेषां मध्याज्जिनरक्षितशीलभद्रस्थिरचंद्रवरदत्तप्रभृति साधवस्तथा श्रीमतिजिनमतिपूर्णश्रीप्रभृतिसाध्व्यश्च वृत्तिपंजिका टीकादिलक्षणशास्त्रभणनार्थं श्रीधारायां प्रेषितास्तैश्च तत्सर्वं भणितं, भक्तिमन्महर्द्धिकश्रावकसाहाय्येन आत्मना श्रीजिनदत्तसूरयो रुद्रपल्यां विहृताः, तत्र च पथि गच्छतामेकस्मिन्ग्रामे श्रावक एकः प्रतिदिनं व्यंतरेण प्रचंडेन पीड्यते तस्य च पुण्येन श्रीजिनदत्तसूरयस्तत्रैव ग्रामे उत्तीर्णास्तेन श्रावकेण विज्ञप्तं शरीरस्वरूपं, परिभावितं श्रीपूज्यैर्यदुतैष मंत्रतंत्राणामसाध्यो व्यंतरस्ततो गणधरसप्ततिकां कृत्वा टिप्पनके लेखयित्वा तस्य व्यंतरगृहीतस्य श्रावकस्य हस्ते टिप्पनकं दत्तं भणितश्च दृष्टिश्चात्र निवेशनीया, तेन च तथा कृतं, यावदसौ व्यंतरो गाढतरपीडायै समागतः खट्वासीमां शरीरेण संक्रांतो गणधरसप्ततिका हृदयनिवेशदर्शनप्रभावाद्द्वितीयदिने द्वारसीमां यावत्समागतस्तृतीयदिने त्वागत एव न, श्रावकस्तु सुस्थो जातः। किंबहुना रुद्रपल्यां संप्राप्ता जिनशेखरोपाध्यायाः श्रावकैः सहितास्संमुखमागताः विस्तरेण मध्ये प्रविष्टा विंशोत्तरं शतकुटुंबानां तत्र श्रीजिनवल्लभसूरिवचनव्यवस्थितकारितं श्रीऋषभनाथश्रीपार्श्वनाथचैत्यद्वयं प्रतिष्ठितं, केचित्सम्यक्त्वधारिणः केचिद्देशविरतिग्राहिणः श्रावका बभूवुः, केचित्सर्वविरतिमग्रहीषुर्देवपालगणिप्रभृतय, एवं तेषां समाधानमुत्पाद्यात्र जयदेवाचार्यान्प्रेषयिष्याम इति भणित्वा पुनः पश्चिमदेशे विहृतास्ततो वाग्जडदेशे समायाता व्याघ्रपुरे तत्रस्थितैः श्रीजयदेवाचार्याः शिक्षां दत्त्वा रुद्रपल्यां प्रेषितास्तत्र स्थितैरेव श्रीजिनवल्लभसूरिप्ररूपितश्रीचैत्यगृहविधिस्वरूपा चर्चरीकृता, सा च टिप्पनके लेखयित्वा प्रेषिता मेहरवासलप्रभृतिश्रावकाणां ज्ञानार्थं विक्र-

मपुरे, देवधरसत्कसाल्हियाभिधानजनकगृहसमीपे पौषधशालास्ति, तस्यामुपविश्य श्रीजिनदत्तसूरिभक्तश्रावकैरुच्छोटितं चर्चरीटिप्पनकं, अत्रान्तरे मदोन्मत्तेन देवधरेणागत्य चर्चरीटिप्पनकमिति भणित्वा हस्तादुद्दाल्य द्विधा कृतं तच्चर्चरीटिप्पनकं, तस्य च किमपि कर्त्तुं न शक्यते, उन्मत्तत्वादेवं तत्पितुरग्रे कथिता वार्त्ता, तेनोक्तं बाढं दुर्दांत एषस्तथापि निवारयिष्यामः। पुनरपि पूज्येभ्यो दत्ता श्रावकैर्विज्ञप्तिका तदंतर्लिखितं चर्चरीटिप्पनकपाटनस्वरूपं पूज्यैरपि लेखार्थमवधार्य पुनर्लेखयित्वा द्वितीयटिप्पनकं चर्चर्याः प्रेषितं लेखश्च प्रेषित इदं च लिखितं। देवधरस्योपरि विरूपकं केनापि न माननीयं, देवगुरुप्रसादादेष भव्यो भविष्यति, तच्च द्वितीयटिप्पनकं प्राप्तं सत्प्रणिपत्य श्रावकैरुच्छोटितं समाधानं च जातं, देवधरेण पुनश्चिंतितं, यद्यपि मया टिप्पनकं पाटितं, तथाप्याचार्यैः पुनरपि प्रेषितमत्र कारणेन केनापि भवितव्यं, तत्प्रच्छन्नं परिभावयाम्येकांते किंतत्र लिखितमस्ति, ततो यदा श्राद्धाः टिप्पनकं स्थापनाचार्यालये मुक्त्वा द्वारं स्थगयित्वा गतास्तदा स्वगृहादुपरि वाटकेन प्रविश्य वहिर्द्वारे स्थगितेऽपि टिप्पनकं गृहीतं वाचयितुं च प्रवृत्तस्ततो "यथा यथा जहिउस्सुत्तजणक्कमुं ४" इत्यादि तदर्थमवधारयति, तथा तथा मनसि प्रमोद उत्पद्यते, अहोऽत्यंतं शोभनो जिनभवनविधि रेतदनुसारेण स्थालीपुलाकन्यायेनान्यदपि सर्वं शोभनं संभाव्यतेऽतोऽत्रमार्गे मया प्रतिपत्तिः कर्त्तव्या। केवलं विंत्रमनायतनं १ स्त्री पूजां नकरोत्येतत्संदेहद्वयंप्रच्छनीयमस्तीति विचिंत्य टिप्पनकं तथैव धृत्वा सन्मार्गविहितचेताः स्वगृहमागतो देवधर, इतश्च वागडदेशे स्थितैः श्रीपूज्यैरपि धारायां ये प्रेषिता आसंस्ते सर्वेऽप्यानायिताः सिद्धांतं श्राविताास्ततः स्वदीक्षितो जीवदेवनामाआचार्यपदे संस्थापितस्तथा च। दश वाचनाचार्याः कृतास्तद्यथा वा० पण्डित जिनरक्षितः १ वा० पण्डित शीलभद्रगणिः २ वा० पण्डित स्थिर चंद्रगणिः ३ वा० पण्डित ब्रह्मचंद्रगणिः ४ वा०

विमलचंद्रगणिः ५ वा० वरदत्तगणिः ६ वा० भुवनचंद्रगणिः ७ वा० चरणागगणिः ८ वा० रामचंद्रगणिः ९ वा० माणिभ-
द्रगणिश्चेति १० दश तथा पंच महत्तरा कृतास्तथाहि श्रीमतिमहत्तरा १ जिनमतिमहत्तरा २ पूर्णश्रीमहत्तरा ३ जिनश्रीमहत्तरा
४ ज्ञानश्रीमहत्तराः ५ चेति तथा हरिसिंहाचार्याणां शिष्यो मुनिचंद्राभिध उपाध्याय आसीत्तेन च जिनदत्तसूरिः प्रार्थितोऽभू-
द्यदि कश्चिन्मदीयशिष्यो योग्यो भवतां समीपे समागच्छति तदा तस्याचार्यपदं दातव्यमेवेति, प्रतिपन्नं प्रभुभि स्ततस्तस्य मुनि-
चंद्रोपाध्यायस्य शिष्यो जयसिंहनामा मुनींद्रपदे निवेशितस्तस्यापि शिष्यो जयचंद्रनामा पत्तने समवसरणे सूरिपदे स्थापितः
द्वयोरप्यग्रे भणितं, यथा युष्माभिरस्मदुक्तरीत्या प्रवर्त्तितव्यमितो, एवं पदस्थापनं कृत्वा तेषां शिक्षां दत्त्वा सर्वेषां विहारादि स्था-
नानि भणित्वा स्वयमजयमेरौ विहृताः श्रीपूज्या स्तत्र श्रावकैश्चैत्यगृहत्रयांबिकास्थानानि पर्वते प्रगुणीकृतानि संति, ततः श्रीजि-
नदत्तसूरिभिः शोभने लग्ने मूलनिवेशे जिनमंदिरेषु विक्षिपिरे वासास्ततः शिखरादि निवेशं कारयामासुः श्रावकाः। इतश्च श्रीविक्र-
मपुरे सल्हिया पुत्र देवधरेण श्रीजिनदत्तसूरि प्रेषित चर्चरीटिप्पनकदर्शनोन्मीलन सद्दर्शनकारि विधिप्रबोधेन, पंचदश स्वकुटुंब
श्रावकसमुदायं कृत्वा स्वजनकाश्च आसदेवादयो भणिताः श्रावका भो मयात्र श्रीजिनदत्तसूरयो विहारं कारयितव्यास्तस्य चाग्रे
कोऽपि किमपि भणितुं न शक्नोति, श्राद्धसमुदायेन निर्गतो नागपुरे संप्राप्तस्तदानीं च तत्र देवाचार्यो विशेषेण प्रसिद्धिपात्रं वर्त्तते,
देवधरोऽपि विक्रमपुरादागतः प्रसिद्धोस्ति जातः श्रुतस्तेन पश्चाद्देवगृहे व्याख्यानप्रस्तावे देवाचार्य उपविष्ट आस्ते, देवधरोऽपि
पादप्रक्षालनादि शौचं कृत्वा देवगृहं गतो, देववंदनादिकृत्वा वंदितो देवाचार्य स्तेनापि पृष्टा क्षेमवार्त्ता, ततः प्रथमत एव देव-
धरेण पृष्ठ आचार्यः, भगवन् ? रात्रौ स्त्री प्रदेश प्रतिष्ठा बलिविधि नंद्यादिकं युज्यते नवा, तच्छ्रुत्वा देवाचार्यश्चिंतयति, कथंचि-

जिनदत्ताचार्यमंत्रोऽस्य कर्णे प्रविष्टोऽतस्तद्वासित इव लक्ष्यते । इति विचिंत्योक्तं, श्रावक? रात्रौ स्त्रीप्रवेशादिकं संगतं नभवति देवधर स्तर्हि किंनवार्यते आचार्यः लक्षसंख्य लोकानां मध्ये को वार्यते, देवधरः भगवन्? यत्र देवगृहे जिनाज्ञा न प्रवर्त्तते किंतर्हि जिनाज्ञा निरपेक्षः स्वेच्छया जनो वर्त्तते, तज्जिनगृहं जनगृहं वा प्रोच्यते इति प्रतिपादयध्वं यूयमाचार्याः यत्र साक्षाज्जिनोऽतनिंविष्टो दृश्यते, तत्कथं जिनमंदिरं नोच्यते, देवधरः आचार्य वयं तावन्मूर्खाः परमेतद्वयमपि जानीमो, यदुत यत्र यस्याज्ञा न वर्त्तते तद्गृहं तदीयं नोच्यते, एवं च पाषाणरूपार्हद्बिंबमात्रांतार्निवेशनेन भगवदाज्ञा परिहारेण स्वेच्छया व्यवहारे कथं नाम तज्जिनमंदिरमुच्यते, परमेवं जानाना अपि, यूयं प्रवाहमार्गं न निवारयध्वं, प्रत्युत पोषयध्वे तदेते वंदिता अनुज्ञापिताश्च मया यूयं यत्र तीर्थंकराज्ञा प्रवर्त्तते समार्गो मयाऽभ्युपेतव्य इत्यभिधायोत्थितो देवधरः, सहानीतस्वकुटुंबरूपश्रावकाणां जातं स्थिरीकरणं विधिमार्गविषये, प्राप्तः श्रावकसमुदायसहितोऽजयमेरौ, वंदिता भावसारं श्रीजिनदत्तसूरयस्तदभिप्रायावगमपूर्वकं कृता पूज्यैर्देशना, जातोऽसौ निःसंदेहोऽभ्यर्थिताः प्रभवः श्रीविक्रमपुरविहारं प्रति, ततो विस्तरेण तत्र देवगृहाबिंबांबिका गणधरादि प्रतिष्ठां विधाय समागतो देवधरेण सह श्रीविक्रमपुरे, प्रतिबोधितस्तत्रत्यो जनो बहुः स्थापिता श्रीमहावीरप्रतिमा, तत्रोच्चायां गच्छतांयेऽन्तराय भूताअरयस्तेऽपि प्रतिबोधिताः, किंपुनरुच्चकीयो लोकस्ततो नरवदातीरे विहृतास्ततस्त्रिभुवनगिरौ प्रतिबोधितस्तत्र कुमारपालो नाम, राजा कृतस्तत्र प्रचुरतरयतिजनविहारः, प्रतिष्ठितो भगवान् शान्तिनाथदेव स्तथोज्जयिन्यां विहारेण प्रतिबोधितं पूज्यैर्योगिनीचक्रं, तथैकदा श्रीचित्रकूटप्रवेशे दुष्टरपशकुनाय सम्मुखीकृतो रश्मिबद्धः कृष्णभुजंगम स्ततो मंदीभूतानि गीतवादित्रादीनि श्रावका अप्यहो न सुंदरमिति, जाताः सविषादास्ततः प्रोक्तं ज्ञानदिवाकरैः श्रीजिनदत्तसूरिभिर्भोः किमेवं विमनस्का यूयं, यथैष कु-

ष्णभुजंगो रज्वा बद्ध एव मन्येऽपि ये केचनासदुष्टास्तेषां बंधनं पतिष्यतीति, प्रेरयताऽतीव सुंदरं शकुनमेतत्पुनरग्रतो गच्छतां दुष्टैरेकाकृत्तनासिका दुर्निमित्तविधानायप्रेषिता, सा चाग्रतः स्थितादृष्टा पूज्यपादैर्जल्पिता च यथा—"आई भल्ली" ततस्तया दुष्टरंडया दत्तं प्रतिवचः यथा "भल्लइ धाणुकइ मुक्की" पुनरुक्ता किंचिद्विहस्य समतिभैः पूज्यैर्यथा—"पक्खाहरा तेण तुहछिन्ना ॥ ततः सा गयाविलक्ख उत्तरनिखुट्टी" इत्यनेकाश्चर्यनिधानानां निरंतरं किंकरैरिव सुरैः[1] सर्वदोपास्यमानपादानां करुणासमुद्राणां धारा पुरीगणपद्रादिस्थानेषु प्रतिष्ठितवीरपार्श्वशांत्यजितादि तीर्थकृद्बिंवदेव गृहशिखराणां स्वज्ञानवलदृष्टनिजपदोद्धारकारिरासलांगरुहाणां भास्करवद्विबोधितभुवनमंडलभव्यांभोरुहाणामेतच्छास्त्रकराणां श्रीजिनदत्तसूरीणां चरितलेशः प्रतिपादितः इति, वृद्धपरंपरया श्रुतः पूर्वाचार्याम्नायः सम्मर्पितः वा० चारित्रसिंहगणिभिर्लिखितो बृहद्वृत्तेरयम् ॥

---

१ कदाचित् श्रीजिनदत्तसूरयो विहारक्रमेण चित्रकूटे संप्राप्ता', तत्र श्रीचिन्तामणिपार्श्वनाथस्वामिन' स्तम्भात् स्वविद्याप्रभावेण विद्याविनायकस्य पुस्तकं प्रघटीकृतम् ॥ ततोऽपि विहरन्त उज्जेन्या गता , तत्रापि श्रीमहाकालनिकेतनाधारात् सिद्धसेनदिवाकरस्य विद्याविनायकग्रन्थम् परिग्रहीतम् हींकारमंत्रस्य कोटित्रयं जापं च कृतवन्त , तथा व्याख्याने चतु षष्टियोगिन्यो वशीकृता ताभिश्च सप्त वराणि दत्तानि ॥ अन्यदावडनगरे गत्वा व्यन्तरप्रयोगेण गौरेका मृता सती जीविता ॥ भटपत्तनतीर्थे च प्रवेशमहोत्सवसमये कश्चिद् मुगलपुत्र पञ्चत्वं गत तं च व्यन्तरप्रयोगेण जीवयन् कथितवान् यावदसौ 'अभक्ष्यम् नाद्यात् तावदस्यायुरस्ति' इति ॥ अम्वडश्रावकेण अम्बिकाया आराधनं कृतं सा यदा तुष्टा तदा अम्वडश्रावकेण कथितं कथयतु भगवती क इदानीं युगप्रधानस्तया च श्लोकमेकं लिखित मुक्तश्च, य एनं पठति सयुगप्रधानो ज्ञेयरिति श्रीजिनदत्तसूरेराज्ञया शिष्येण तज्जल्पितं किं वहुना दासानुदासा इव सर्वदेवा यदीयपादाब्जतले लुठंति मरूस्थलीकल्पतरु सजीयाद् युगप्रधानो जिनदत्तसूरि ।

इदानीं श्रीजिनदत्तसूरिविरचिताः सार्धशतसंख्याका 'मूलागाथाः' छायया च 'समन्विता वक्तुम् प्रारभंते'

मू.गुणमणिरोहणगिरिणो रिसहजिणिंदस्स पढमसुणिवइणो।सिरिउसभसेनगणहारिणो णहे पणिवयामि पओ १

गुणमणिरोहणगिरेश्च ऋषभजिनेंद्रस्य प्रथममुनिपतेः ॥ श्रीमदृषभसेनगणधरस्याऽनघौ प्रणिपतामि पादौ।

अजियाइजिणिंदाणं जणियाणंदाणं पणयपाणीणं । थुणिमो दीणमणो हं गणहारीणं गुणगणोहं ॥ २ ॥

अजितादिजिनेन्द्राणां जनितानन्दानां प्रणतप्राणिनाम् ॥ स्तौम्यदीनमनसो ऽहम् गणधराणां च गुणगणौघम् ।

सिरिवद्धमाणवरनाणचरणदंसणमणीणं जलनिहिणो । तिहुयणपहुणो पडिहणिय सत्तुणो सत्तमो सीसो ॥३॥

श्रीवर्द्धमानवरज्ञानचारित्रदर्शनमणीनां जलनिधेः । "त्रिभुवनप्रभोः प्रतिहतशत्रोः सत्तमं शिष्यञ्च" ।

संखाईए वि भवे साहिंतो जो समत्त सुयनाणी ।छउमत्थेण न नज्जइ एसो न हु केवली होइ ॥ ४ ॥

संख्यातीतानपि भवान् साधयन् यः समस्तश्रुतज्ञानी ॥ छद्मस्थेन न ज्ञायतेऽसौ नैव केवली भवति ।

तं तिरियमणुयदाणवदेविंदनमंसियं महासत्तं । सिरिनाणसिरिनिहाणं गोयमगणहारिणं वंदे ॥ ५ ॥

तं तिर्यङ्मनुजदानवदेवेन्द्रनमस्कृतं महासत्वम् ॥ श्रीज्ञानश्रीनिधानं गौतमगणधारिणं वन्दे ।

जिणवद्धमानमुनिवइसमप्पियासेसतित्थभारधरणेहिं । पडिहयपडिवक्खेणं जयम्मि धवलाइयं जेण ॥ ६ ॥

जिनवर्द्धमानमुनिपतिसमर्पिताशेषतीर्थभारधरणेन ॥ प्रतिहतप्रतिपक्षेण जगति धवलायितं येनैव ।

तं तिहुयणपणयपयारविंदमुद्दामकामकरिसरहं । अनहं सुहम्मसामिं पंचमट्ठाणट्ठियं वंदे ॥ ७ ॥

तं त्रिभुवनप्रणतपदारविन्दमुद्दामकामकरिशरभम् ॥ अनघं सुधर्मस्वामिनं पंचमस्थानस्थितं वन्दे

तारुन्ने वि हु नो तरलतारअत्थिपिच्छरीहिं मणो । मणयं वि मुणियपवयणसब्भावं भामियं जस्स ॥ ८ ॥

तारुण्येऽपि हु नो तरलताराक्षिप्रेक्षिणीभिर्मनः ॥ मनागपि मतप्रवचनसद्भावं भ्रामितं यस्य

मणपरमोहि पमुहाणि परमपुरपट्ठिएण जेण समं । समईक्कंताणि समत्तभव्वजणजणियसुक्खाणि ॥ ९ ॥

मनस्परमावधिप्रमुखानि परमपुरप्रस्थितेन येन समं ॥ समतिक्रांतानि समस्तभव्यजनजनितसौख्यानि

तं जंबुनामनामं सुहम्मगणहारिणो गुणसमिद्धं । सीसं सुसीसनिलयं गणहरपयपालयं वंदे ॥ १० ॥

तं जम्बूनामनामानं सुधर्मगणधारिणो गुणसमृद्धं ॥ शिष्यं सुशिष्यनिलयं गणधरपदपालकं वन्दे

संपत्तवरविवेयं वयत्थिगिहिजंबुनामवयणाओ । पालिययुगपवरपयं पभवायरियं सया वन्दे ॥ ११ ॥

संप्राप्तवरविवेकं व्रतार्थिगृहिजम्बूनामवचनात् तं ॥ पालितयुगप्रवरपदं प्रभवाचार्यं सदा वन्दे

कट्ठमहो परमो यं तत्तं न मुणिज्जइत्ति सोऊणं । सज्जंभवंभवाओ विरत्तचित्तं नमंसामि ॥ १२ ॥

कष्टमहो परमोऽयं तत्वं न ज्ञायत इति श्रुत्वापि ॥ शय्यंभवं भवतो विरक्तचित्तं नमयिस्यामि

संजणियपणयभद्दं जसभद्दं मुणिगणाहिवं सगुणं । संभूयं सुहसंभूई भायणं सूरि मणुस्सरिमो ॥ १३ ॥

संजनितप्रणतभद्रं यशोभद्रं मुनिगणाधिपं सगुणं ॥ संभूतं सुखसंभूतिभाजनं सूरि मनुस्सरामः

सुगुरूतरणीइ जिणसमय सिंधुणो पारगामिणो सम्मं । सिरिभद्दबाहुगुरुणो हियए नामक्खराणि धरिमो ॥१४॥

सुगुरुतरणीति जिनसिद्धान्तसिन्धोः पारगामिनः सम्यक् ॥ श्रीभद्रबाहुगुरोर्हृदये नामाक्षराणि धरामहे

सो कहं न थूलभद्दो लहइ सलाहं मुणीणं मज्झंमि । लीलाइ जेण हणिओ सरहेण व मयणम यराओ ॥ १५ ॥

स कथं न स्थूलभद्रो लभते श्लाघां मुनीनां मध्येपि । लीलया येन हतः शरभेणेव मदनमृगराजः

कामपईवसिहाए कोसाए बहुसिणेहभरिआए । घणदड्ढ जणपयंगाए वि जीए जो झामिओ नेया ॥ १६ ॥

कामप्रदीपशिखया कोशया बहुस्नेहभृतया ॥ घनदग्धजनपतङ्गयाऽपि यया यो ध्मापितो नैव

जेण रविणेव विहिए इह जणगिहे सप्पहं पयासंती । सययं सकज्ज लग्गा पहयपहा सा सणिद्धावि ॥ १७ ॥

येन रविणेव विहितेह जनगृहे स्वप्रभां प्रकाशयंती ॥ सततं स्वकार्ये लग्ना प्रहतप्रभा सा स्निग्धापि

जेणासु साविया साविया चरणकरणसहिएण । सपरेसिं हियकए सुकयजोगउ जोगयं दट्टुं ॥ १८ ॥
येनाशु श्राविताः श्राविकाः चरणकरणसहितेन ॥ स्वपरयोर्हितकृते सुकृतयोगतो योग्यत्वं दृष्ट्वा
तमपच्छिमं चउद्दसपुव्वीणं चरणनाणसिरिसरणं । सिरिथूलभद्दसमणं वंदे हं मत्तगयगमणं ॥ १९ ॥
तमपश्चिमं चतुर्दशपूर्विणां चरणज्ञानश्रीशरणं ॥ श्रीस्थूलभद्रश्रमणं वंदे ऽहं मत्तगजगमनम्
विहियाअणगूहियविरियसत्तिणा सत्तमेण संतुलणा । जेणाज्जमहागिरिणा समईक्कंते वि जिणकप्पे ॥ २० ॥
विहिताऽनवगूढवीर्यशक्तिना सत्तमेन संतुलना च ॥ येनार्यमहागिरिणा समतिक्रान्ते ऽपि जिनकल्पे
तस्स कणिट्ठं लट्ठं अज्जसुहत्थिं सुहत्थिजणपणयं । अवहत्थियसंसारं सारं सूरिं समणुसरिमो ॥ २१ ॥
तस्य कनिष्ठं लष्ठमार्य्यं सुहस्तिं सुखार्थिजनप्रणतम् ॥ अपहस्तितसंसारं सारं सूरिं समनुस्मरामः
अज्जसमुद्दं जणयं सिरीइ वंदे समुद्दगंभीरं । तह अज्जमंगुसूरिं अज्जसुधम्मं य धम्मरयं ॥ २२ ॥
आर्य्यसमुद्रं जनकं श्रिया वन्दे समुद्रगम्भीरम् च ॥ तथैवार्य्यमंगुसूरि मार्यसुधर्मं च धर्मरतम्
मणवयणकायगुत्तं तं वंदे भद्दगुत्तगणनाहं । जइ जिमइ जई जम्मडलीए पत्तो मरइ तेहिं समं ॥ २३ ॥
मनोवचनकायगुप्तं तं वन्दे भद्रगुप्तगणनाथम् ॥ यद्यत्ति यतिर्यन्मण्डल्यां प्राप्तो म्रियते तैः समम्

छमासिएण सुकयाणुभावओ ज्ञाय जाइ सरणेणं । परिणामओ णवज्जा पव्वज्जा जेण पडिवत्ता ॥ २४ ॥
षण्मासिकेन सुकृतानुभावतो जातज्ञातिसरणेन ॥ परिणामतोऽनवद्या प्रव्रज्या येन प्रतिपन्ना
तुंबवणासंनिवेसे जाएणं नंदणेणं नंदाए । धणगिरिणो तणएणं तिहुयणपभुपणयचरणेणं ॥ २५ ॥
तुम्बवनसंनिवेशे सुजातेन नन्दनेन नन्दायाः ॥ धनगिरेस्तनयेन त्रिभुवनप्रभुप्रणतचरणेन
इग्गारसंगपाढो कओ दढं जेण साहुणीहिंतो। तस्स ज्झायज्झयणुज्जएण वयसा छवरिसेणं ॥ २६ ॥
एकादशाङ्गपाठः कृतो दढं येन साध्वीभ्यः ॥ तासां स्वाध्यायाध्ययनोद्यतेन वयसा षड्वार्षिकेन
सिरिअज्जसीहगिरिणा गुरुणा विहिओ गुणाणुरागेणं। लहुओ वि जो गुरुकओ नाणदाणओ सेससाहूणं ॥२७॥
श्रीमदार्य्यसिंहगिरिणा गुरुणा विहितगुणानुरागेण ॥ लघुरपि यो गुरुकृतो ज्ञानदानादशेषसाधूनाम्
उज्जेणीए गहिअव्वओ लहुगुज्झगेहिं वरिसंते । जो सुजइत्ति निमिंतियपरिक्खिओ पत्ततव्विज्जो ॥ २८ ॥
उज्जयन्यां ग्रहीतव्रतो ऽसौ लघुगूह्यकैर्वर्षत्सु ॥ यः सुयतिरिति निमंत्र्य परिक्षितः प्राप्ततद्विद्यः
उद्धरिया जेण पयाणुसारिणा गयणगामिणीविज्जा । सुमहापईन्नपुव्वाओ सव्वहा पसमरसिएण ॥ २९ ॥
उद्धृता येन पदानुसारिणा गगनगामिनी विद्या ॥ सुमहाप्रकीर्णपूर्वतः सर्वथा प्रशमरसिकेन

दुक्कालंमि दुवालसवरसियंमि सीयमाणे संघंमि । विज्जावलेंण माणियमन्नं जेणन्नक्खित्ताओ ॥ ३० ॥

दुष्कालेषु द्वादशवार्षिकेषु च सीदत्सु संघेषु ॥ विद्याबलेनानीतमन्नं येनान्यक्षेत्रतः

सुररायचायविब्भमभमुहाधणुमुक्कनयणवाणाए । कामग्गिसमीरणविहियपात्थणावयणघट्टणाए ॥ ३१ ॥

सुरराजचापविभ्रमभ्रूधनुर्मुक्तनयनवाणया ऽपि ॥ कामाग्निसमीरणविहितप्रार्थनावचनघट्टनया

लद्धंगपइट्ठाए सिट्ठिसुयाए विसिट्ठचिट्ठाए । गुणगणसवणाओ जस्स दंसणुक्कंठियमणाए ॥ ३२ ॥

लब्धाङ्गप्रतिष्ठया श्रेष्ठिसुतया विशिष्टाचेष्टिकया ॥ गुणगणश्रवणाद्यस्य दर्शनोत्कण्ठितमानसया

निजजणयदिन्नधणकणयरयणरासीए जो ण कन्नाए । तुच्छमवि मुच्छिओ जुव्वणे वि धनियं धणड्ढाए ॥ ३३ ॥

निजजनकदत्तधनकनकरत्नराश्या यो नो कन्यया ॥ तुच्छमपि मूर्च्छितो यौवनेऽपि धनितं धनाढ्यकया

जलणगिहाओ माहेसरीए कुसुमाणि जेण समाणित्ता । तिवन्नियाणं माणो मलिओ संघुन्नई विहिया ॥ ३४ ॥

ज्वलनगृहाद् माहेश्वर्याम् कुसुमानि येन समानीय च ॥ त्रैवर्णिकानां मानो मलितः संघोन्नतिर्विहिता

दूरोसारिय वइरो वयरसेननामेण जस्स वहु सीसो । सा सो जाओ जाओ जयम्मि जायाणु सारि गुणो ॥३५॥

दूरोत्सारितवैरो वज्रसेननाम्ना यस्य बहुशिष्यः ॥ सो ऽसौ जातो जातो जगति जातानुसारिगुणश्च

कुंकुणविसए सौपायंमि सुगुरुवएसओ जेण । कहिय सुभिक्ख मविग्घ विहिओ संघो गुणमहग्घो ॥ ३६ ॥
कुंकुणविषयेषु सौपारके सुगुरूपदेशतो येन ॥ कथयित्वा सुभिक्षमविघ्नं विहितः संघो गुणमहार्घ्यः
तमहं दसपुव्वधरं धम्मधुराधरणसेससमविरियं । सिरिवइरसामिसूरिं वंदे थिरियाइ मेरुगिरिं ॥ ३७ ॥
तमहं दशपूर्वधरं धर्मधुराधरणशेषसमवीर्यम् ॥ श्रीवज्रस्वामिसूरिं वन्दे स्थैर्येण मेरुगिरिम्
निअजणणिवयणकरणंमि उज्जओ दिट्ठिवायपढणत्थं । तोसलिपुत्तंतगओ ढड्ढरसड्ढाणुमग्गेण ॥ ३८ ॥
निजजननीवचनकरण उद्यतो दृष्टिवादपठनार्थम् ॥ तौशलिपुत्रान्ते गतो ढड्ढरश्राद्धानुमार्गेण ।
सड्ढाणुसारओ विहिय सयलमुणिवंदणो य जो गुरुणा । अकयाणुवंदणो सावगस्स जो एवमिह भणिओ ॥३९॥
श्राद्धानुसारतो विहितसकलमुनिवन्दनश्च यो गुरुणा ॥ अकृतानुवंदनः श्रावकस्य य एव मिहभणितश्च
को धम्मगुरु तुम्हाणमित्थ य तेण वि विणय पणएणं । गुरुणो निदंसिओ स ढड्ढरसड्ढो वियड्ढेण ॥ ४० ॥
को धर्मगुरु युष्माकमत्र च तेनापि विनयप्रणतेन ॥ गुरोर्निर्दर्शितः स ढड्ढरश्राद्धो विदग्धेन
अकयगुरुणिण्हवेणं सूरिसयासंमि जिणमयं सोउ । परिवज्जिय सावज्जं पवज्जागिरिं समारूढो ॥ ४१ ॥
अकृतगुरुनिह्नवेन सूरेः सकाशाज्जिनमतं श्रुत्वा ॥ परिवर्जितसावद्यं प्रव्रज्यागिरिं समारूढः

सीहत्तानिक्खंतो सीहत्ताए य विहरिओ जोउ। साहियनवपुव्वसुओ संपत्तमहंत्त सूरिपओ ॥ ४२ ॥

सिंहत्वेन निष्क्रान्तः सिंहतया च प्रविचरितो यस्तु ॥ साधिकनवपूर्वश्रुतः संप्राप्तो महासूरिपदम्

सुरवरपहुपट्ठेणं महाविदेहंमि तित्थनाहेणं। कहिउ निगोयभूयाणं भासओ भारहे जोउ ॥ ४३ ॥

सुरवरप्रभुपृष्टेन महाविदेहेषु तीर्थनाथेन ॥ कथितो निगोदभूतानां भासको भारते यस्तु

जस्स सयासे सक्को माहणरूवेण पुच्छए एवं। भयवं फुडमन्नेसि अ मह कित्तियमाउयं कहसु ॥ ४४ ॥

यस्य सकाशे शक्रो ब्राह्मणरूपेण पृच्छति चैवम् ॥ भगवन् स्फुटं मन्यसे च मम कियद्मितमायुः कथय

सक्को भवन्ति भणिओ मुणिओ जेणा उयप्पमाणेण। पुट्ठेण निगोयाणं वि वण्णणा जेण निद्दिठ्ठा ॥ ४५ ॥

शक्रो भवान् भणितो मत्वा येनायुः प्रमाणेन ॥ पृष्टेन निगोदानामपि वर्णना येन निर्दिष्टा

हरिसभरनिब्भरेणं हरिणा जो संत्थुओ महासत्तो। जेण सपयम्मि सूरी वि ठाविओ गुणिसु बहुमाणो ॥४६॥

हर्षभरनिर्भरेण हरिणा यः संस्तुतो महासत्वः ॥ येन स्वपदे सूरिरपि स्थापितो गुणिषु बहुमानः

रक्खियचरित्तरयणं पयडियजिणपवयणं प्पसंतमणं। वंदामि अज्जरक्खियमलक्खियंतं क्खमासमणं ॥ ४७ ॥

रक्षितचारित्ररत्नं प्रकटितजिनप्रवचनं प्रशान्तमनसम् ॥ वन्दामि चार्य्यरक्षितमलक्षितान्तं क्षमाश्रमणम्

तयणुजुगपवरगुणिणो जाया जायाणं जे सिरोमणिणो । सन्नाणचरणगुणरयणजलहिणो पत्तसुयनिहिणो ॥४८॥

तदनुयुगप्रवरगुणिनो जाता जातानां ये शिरोमणयः ॥ सज्ज्ञानचरणगुणरत्नजलधयः प्राप्तश्रुतनिधयः

परवादिवारवारणवियारणे जे मियारिणो गुरुणो । ते सुगहियनामाणो सरणं मह हंतु जइ पहुणो ॥ ४९ ॥

परवादिवारवारणविदारणे ये मृगारयो गुरवः ॥ ते सुग्रहीतनामानः शरणं मम भवन्तु यतिप्रभवः

पसमरइपमुहपयरण पंचसया सक्कया कया जेहिं । पुव्वगयवायगाणं तेसि सुमासाइनामाणं ॥ ५० ॥

प्रशमरतिप्रमुखप्रकरण पंचशताः संस्कृताः कृता यैः ॥ पूर्वगतवाचकानां तेषामुमास्वातिनाम्नाम् च

पडिहयपडिवक्खा णं पयडीकयपणयपाणिसुक्खाणं । पणमामि पायपउमं विहिणा विणएण निच्छउमं ॥ ५१ ॥

प्रतिहतप्रतिपक्षाणां प्रगटीकृतप्रणतप्राणिसौख्यानाम् ॥ प्रणमामि पादपद्मं विधिना विनयेण निश्छद्मम्

जाइणिमहयरियावयणसवणओ पत्तपरमनिव्वेओ । भवकारागाराओ साहंकाराओ नीहरिओ ॥ ५२॥

याकिनीमहत्तरावचनश्रवणतः प्राप्तपरमनिर्व्वेदः ॥ भवकारागारादेव स्वाहंकारात् निस्सरितश्च

सुगुरुसमीवोवगओ तदुत्तसुत्तोवएसओ जो उ । पडिवन्नसव्वविरइ तत्तरुई तत्थ विहियरई ॥ ५३ ॥

सुगुरुसमीपोपगतस् तदुक्तसूत्रोपदेशतो यस्तु ॥ प्रतिपन्नसर्वविरति स्तत्वरुचिस्तत्र विहितरतिः

गुरुपारंतउपगतगणिपओ वि मुणिय जिणमयंसम्मं । मयरहिओ सपरहियं काउ मणो पयरणे कुणइ ॥ ५४ ॥
गुरुपारतंत्र्यादुपगतगणिपदोऽपि मत्वा जिनमतम् सम्यग् ॥ मदरहितः स्वपरहितं कर्तुमनाः प्रकरणान् करोति
चउदससयपयरणगो निरुद्धदोस सया हयप्पओसो । हरिभद्दो हरियतमो हरिव्व जाओ जुगप्पवरो ॥ ५५ ॥
चतुर्दशशतप्रकरणगो निरुद्धदोषः सदा हतप्रद्वेषः ॥ हरिभद्रो हरिततमाः हरिरिव जातो युगप्रवरः
उइयंमि मिहिरिभद्दं सुदिट्ठिणो होइ मग्गदंसणओ । तहहरिभद्दा यरिए भद्दायरियंमि उदयमिए ॥ ५६ ॥
उदिते मिहिरे भद्रं सुदृष्टिनो भवन्ति मार्गदर्शनतः ॥ तथा हरिभद्राचार्ये भद्राचरणे उदयमिते
जं पइ केई समनामा भो लिया भो लियाइं जंपंति । चीयावासिदिक्खिओ सिक्खिओ य गीयाण तं नमयं ॥५७॥
यं प्रतिकेऽपि समनाम्ना भ्रांत्या भो अलीकानि जल्पन्ति ॥ चैत्यावासिदीक्षितः सिक्षितश्च गीतान् तं नमत
हयकुसमयभडजिणभडसीसो सेसुव्व धरियतित्थधरो । जुगपवरजिणदत्तपहुत्तसुत्ततत्तत्थरयणसिरो ॥५८॥
हतकुसमयभटजिनभटशिष्यः शेष इव धृततीर्थधरः ॥ युगप्रवरजिनदत्तप्रभूक्तसूत्रतत्वार्थरत्नशिराः
तं संकोइयकुसमयकोसिअकुलममलमुत्तमं वंदे । पणयजणादिन्नभद्दं हरिभद्दपहुं पहासंतं ॥ ५९ ॥
तं संकोचितकुसमयकौशिककुलममलमुत्तमं वंदे ॥ प्रणतजनदत्तभद्रं हरिभद्रप्रभुं प्रकाशयन्तम्

आयारवियारणवयण चंदियादलीयसयलसंतावो । सीलंको हरिणंकुव्व सोहइ कुमुयं वियासंतो ॥ ६० ॥

आचारविचारणवचनचंद्रिकादलितसकलसंतापः ॥ शीलाङ्को हरिणाङ्क इव शोभते कुमुदं विकाशयन्

तयनंतरंदुत्तरभवसमुद्दमज्जंतभव्वसत्ताणं । पोयाणुव्व सूरीणं जुगपवराणं पणिवयामि ॥ ६१ ॥

तदनन्तरं दुस्तरभवसमुद्रमज्जद्भव्यसत्वानाम् ॥ पोतानामिव सूरीणां युगप्रवराणां प्रणिपतामि

गयरागरोसदेवो देवायरिओ य नेमिचंदगुरु । उज्जोयणसूरिगुरु गुणोह गुरुपारतंतगओ ॥ ६२ ॥

गतरागरोषदेवो देवाचार्यश्च नेमिचन्द्रगुरुः ॥ उद्द्योतनसूरिगुरु र्गुणौघो गुरुपारतंत्र्यगतः

सिरिवद्धमाणसूरी पवद्धमाणाइरित्तगुणनिलओ । चियवासमसंगयमवगमित्तु वसहिहिंजोवसिउ ॥ ६३ ॥

श्रीवर्द्धमानसूरिः प्रवर्द्धमानातिरिक्तगुणनिलयः ॥ चैत्यवासमसंगतमवगम्य वसतौ यस्तूसितश्च

तेसिं य पयपउमसेवारसिओ भमरुव्व सव्वभमरहिओ । ससमयपरसमयपयत्थसत्थवित्थारणसमत्था ॥ ६४ ॥

तेषाञ्च पादपद्मसेवारसिको भ्रमरवत् सर्वभ्रमरहितः ॥ स्वसमयपरसमयपदार्थसार्थविस्तारणसमर्थः

अणहिल्लवाडए नाडइव्व दंसिय सुपत्तसंदोहे । पउरपए बहुकविदूसगे य सन्नायगाणुगए ॥ ६५ ॥

अणहिल्लपाटके नाटक इव दर्शितसुपात्रसंदोहे ॥ प्रचुरपयसि बहुकविदूपके च सन्नायकानुगतेऽपि

सद्धियदुल्लहराए सरसइ अंको वसोहिए सुहए । मज्झे रायसहं पविसिऊण लोयागमणुमयं ॥ ६६ ॥

सर्द्धिकदुर्ल्लभराजे सरस्वत्यङ्कोपशोभिते सुहये ॥ मध्ये राजसभां प्रविश्य लोकागमानुमयश्च

नामायरिएहिं समं करिय वियारं वियाररहिएहिं । वसइहिं निवासो साहूणं ठाविओ ठाविओ अप्पा ॥६७॥

नामाचार्यैः समं कृत्वा विचारं विचाररहितैश्च ॥ वसतौ निवासो साधूनां स्थापितः स्थापित आत्मा

परिहरिय गुरुक्कमागयवरवत्ताए य गुज्जरत्ताए । वसहि निवासो जेहिं फुडीकओ गुज्जरत्ताए ॥ ६८ ॥

परिहृत्य गुरुक्रमागतवरवार्तायां च गुर्ज्जरत्रायाम् ॥ वसतिनिवासो यैश्च स्फुटीकृतो गुर्ज्जरत्रायाम् ॥

तिजगय गयजीवबंधूणं यव्वंधु बुद्धिसागरसूरि । कयवायरणो वि न जो विवायरणकायरोजाओ ॥ ६९ ॥

त्रिजगद्गतजीवबन्धूनां यो बन्धुर्बुद्धिसागरसूरिः ॥ कृतवादरणोऽपि न यो विवादरणकायरो जातः

सुगुणजणजणियभद्दो सूरि जस्स विणेयगणप्पढमो । सपरेसिं हिया सुरसुंदरीकहा जेण परिकहिया ॥ ७० ॥

सुगुणजनजनितभद्रः सूरिर्यस्य विनेयगणप्रथमः ॥ स्वपरयोर्हिता सुरसुन्दरीकथा येन परिकथिता हि

कुमयं वियासमाणो विहडावियकुमयचक्कवायगणो । उदयमिओ जस्सीसो जयंमि चंदुव्व जिणचंदो ॥ ७१ ॥

कुमुदं विकाशमानो विघटितकुमतचक्रवादगणः ॥ उदयमितो यच्छिष्यो जगत्सु चन्द्र इव जिनचंद्रः

संवेगरंगसाला विसालसालोवमा कया जेण । रागाइवेरिभयभीयभव्वजणरक्खणनिमित्तं ॥ ७२ ॥

सेवंगरंगशाला विशालशालोपमा कृता येन ॥ रागादिवैरिभयभीतभव्यजनरक्षणनिमित्तम्

कहसिवसुहत्थिसेवो भयदेवो वगयसमयपयक्खेवो । जस्सीसो विहियनवंगवित्ति जलधोयजललेवा ॥ ७३ ॥

कृतशिवसुखार्थिसेवोऽभयदेवोऽवगतसमयपदक्षेपः ॥ यच्छिष्यो विहितनवाङ्गवृत्तिर्जलधोतजडलेपः

जेण नवंगविवरणं विहियं विहिणा समं सिवसिरीए । काउं नवंगविचरणं विहियमुज्झिय भवजुवइसंजोगं ॥७४॥

येन नवाङ्गविवरणम् विहितं विधिना समं शिवश्रिया च ॥ कर्तुं नवङ्गविचरणं विहितमुज्झित्वाभवयुवतिसंयोगम्

जेहिं बहुसीसेहिं शिवपुरपहपत्थियाणं भव्वाणं । सरलो सरणी समगं कहिओ ते जेण जन्ति तयं ॥ ७५ ॥

यैर्बहुशिष्यैः शिवपुरपथप्रस्थितानां भव्यानाम् ॥ सरलः सरणिः समगः कथितस्ते येन यान्ति सकम्

गुणकणमवि परिकहिउं न सक्कई सक्कई वि जेसिं फुडं । तेसिं जिणेसरसूरीणं चरणसरणं पवज्जामि ॥ ७६ ॥

गुणकणमपि परिकथितुं न शक्नोति सत्कविरपि येषां स्फुटम् ॥ तेषां जिनेश्वरसूरीणां चरणशरणं प्रव्रजामि

युगपवरागमजिणचंदसूरि विहिकहियसूरिमंतपयो । सूरी असोगचंदो मह मण कुमुयं विकासेउ ॥ ७७ ॥

युगप्रवरागमजिनचन्द्रसूरिर्विधिकथितसूरिमंत्रपदः ॥ सूरिरशोकचंद्रो मम मनःकुमुदं विकाशयतु

कहियगुरुधम्मदेवो धम्मदेवो गुरुउवज्झाओ अ। मज्झावि तेसिं य दुरंतदुहहरो सो लहु होउ ॥ ७८ ॥

कथितगुरुधर्मदेवो धर्मदेवो गुरु रुपाध्यायश्च ॥ ममापि तेषां च दुरन्तदुःखहरः स लघु भवतु हि

तस्स विणेओ निद्दलिअगुरुगओ जो हरिव्व हरिसीहो। मज्झ गुरु गणिपवरो सो मह मणवंच्छियं कुणइउ ॥७९॥

तस्य विनेयो निर्दलितगुरुगजो यो हरिरिव हरिसिंहः ॥ मम गुरुर्गणिप्रवरः स मम मनोवांछितं करोतु

तेसिं जिट्ठो भाया भायाणं कारणं सुसीसाणं। गणिसव्वदेवनामो न नामिओ केण इ हट्ठेण ॥ ८० ॥

तेषां ज्येष्ठो भ्राता भाग्यानां कारणम् सुशिष्याणाम् ॥ गणिसर्वदेवनामा न नामितः केनापि हठेण

सूरससिणो वि न समा जेसिं जं ते कुणंति अत्थमणं। नक्खत्तगया मेसं मीणं मयरं वि भुंजंते ॥ ८१ ॥

सूर्यशशिनावपि न समौ येषां यत् तौ कुरुतो ऽस्तमयम् ॥ नक्षत्रगतौ मेषं मीनं मकरं चापि भुङ्क्तः

जेसिं पसाएण मए मएण परिवज्जियं पयं परमं। निम्मलपत्तं पत्तं सुहसत्तसमुन्नइनिमित्तं ॥ ८२ ॥

येषां प्रसादेन मया मदेन परिवर्जितं पदं परमम् ॥ निर्मलपात्रं प्राप्तं शुभसत्वसमुन्नतिनिमित्तम्

तेसिं नमो पायाणं पायाणं जेहिं रक्खिया अह्मे। सिरिसूरिदेवभद्दाणं सायरं दिन्नभद्दाणं ॥ ८३ ॥

तेषां नमः पादेभ्यः पातकेभ्यर्यै रक्षिता वयम् ॥ श्रीसूरिदेवभद्राणां सादरं दत्तभद्राणाम्

सूरिपदं दिन्नमसोगचंदसूरीहिं चत्त भूरीहिं । तेसि पयं मह पहुणो दिन्नं जिणवल्लहस्स पुणो ॥ ८४ ॥

सूरिपदं च दत्तमशोकचंद्रसूरिभिस्त्यक्तभूरिभिः ॥ तैः पदं मम प्रभो र्दत्तं जिनवल्लभस्य पुनः

अत्थगिरिमुवगएसिं जिणजुगपवरागमेसु कालवसा । सूरमिव दिट्ठिहरेण विलसियं मोहसंतमया ॥ ८५ ॥

अस्तगिरि मुपगतेषु जिनयुगप्रवरागमेषु कालवशात् ॥ सूर्य इव दृष्टिहरेण विलसितं मोहसंतमसेन

संसारचारगाओ निव्वण्णेहिं पि भव्वजीवेहिं । इच्छंतेहिम वि मुक्खं दीसइ मुक्खारिहो न पहो ॥ ८६॥

संसारचारकेभ्य र्निर्विण्णैरपि भव्यजीवकैः ॥ इच्छद्भिरपि च मोक्षं दृश्यते मोक्षार्हो न पन्था

फुरियं नक्खत्तेहिं महागहेहिं तओ समुल्लसियं । वुड्ढीरयणियरेण वि पाविआ पत्तवसरेण ॥ ८७ ॥

स्फुरितं नक्षत्रकै र्महाग्रहै स्ततः समुल्लसितम् ॥ वृद्धिरजोनिकरेणापि प्राप्तावसरेणापि चैव

पासत्थकोसिअकुलं पयडीहोऊण हंतुमारद्धं । काएकाएय विघाए भाविभयं जं ण तं गणइ ॥ ८८ ॥

पार्श्वस्थकौशिककुलं प्रत्यक्षीभूय हन्तुमारब्धम् ॥ काय काकानां च विघाते भाविभयं यन्न तद्गणयति

जाग्गंति जणा थोवा सपरेहिं निव्वुइं समिच्छत्ता । परमात्थरक्खणत्थं सद्दं सद्दस्स मेलंता ॥ ८९ ॥

जाग्रन्ति जनाः स्तोकाः स्वपरयो र्निर्वृत्तिं समिच्छंतः ॥ परमार्थरक्षणार्थ शब्दं शब्दस्य मेलयन्तः

नाणासत्थाणि धरंति ते उ जेहिं वियारिऊण परं। मुसणत्थमागयं परिहरंति निज्जीवमिह काउं ॥ ९० ॥

नानाशास्त्राणि धारयन्ति ते तु यैश्च विचार्य परम् ॥ मोषणार्थमागतं परिहरन्ति निर्जीवमिह कृत्वा

अविणासियजीवं ते धरंति धम्मं सुवंसनिप्पण्णं । सुक्खस्स कारणं भयनिवारणं पत्तनिव्वाणं ॥ ९१ ॥

अविनाशित जीवं ते धरन्ति धर्मं सुवंशनिष्पन्नम् ॥ सुखस्य कारणं भयनिवारणं प्राप्तनिर्वाणम्

धरियकिवाणा केई सपरे रक्खंति सुगुरुफरयजुआ। पासत्थचोरविसरो वियारभीओ न ते मुसई ॥ ९२ ॥

धारितकृपाणाः केचित् स्वपरान् रक्षन्ति सुगुरुफरकयुताः ॥ पार्श्वस्थचौरविसरा विचारभीता न ते मुषन्ति

मग्गुमग्गा न्नज्जंति नेय विरलो जणो त्थि मग्गण्णू । थोवा तदुत्तमग्गे लग्गंति न वीससंति घणा ॥ ९३ ॥

मार्गोन्मार्गान् जानन्ति नैव विरलो जनोऽन्ति मार्गज्ञः ॥ स्तोकास्तदुक्तमार्गे लगन्ति न विश्वसन्ति घनाः

अन्ने अण्णत्थीहिं सम्मं सिवपहमपिच्छरेहिंपि। सत्था सिवत्थिणो चालिया वि पडिपडिया भवारण्णे ॥ ९४ ॥

अन्येऽन्यार्थिभिः समकं शिवपथमप्रेक्ष्यमाणै रपि ॥ सार्थाः शिवार्थिन श्चालिता अपि प्रतिपतिता भवारण्ये

परमत्थसत्थरहिएसु भव्वसत्थेसु मोहनिद्दाए । सुत्तेसु मुसिज्जंतेसु पोढपासत्थचोरेहिं ॥ ९५ ॥

परमार्थशस्त्ररहितेषु भव्यसार्थेषु मोहनिद्रया च ॥ स्वप्तेषु मुष्यमाणेषु प्रौढपार्श्वस्थचौरकैः

असमंजसमेआरिस मवलोइअ जेण जायकरुणेणं । एसा जिणाणमाणासुमरिया सायरं तइआ ॥ ९६ ॥

असमंजसमेतादृशमवलोक्य येन जातकरुणेन ॥ एषा जिनानामाज्ञा सारिता सादरं तदातु

सुहसीलतेणगहिए भवपल्लितेण जगडिअमणाहे । जो कुणइ कूजियत्तं सोवण्णं कुणई संघस्स ॥ ९७ ॥

सुखशीलस्तेनग्रहीते भवपल्यांतेन जगडितानाथे ॥ यः करोति कूजितत्वं सवर्ण करोति संघस्य

तित्थयररायाणो आयरि आरक्खि अ व्व तेहिं कया । पासत्थपमुहचोरोवरुद्धघणभव्वसत्थाणं ॥ ९८ ॥

तीर्थकरराजा आचार्या आरक्षका इव तैः कृताः ॥ पार्श्वस्थप्रमुखचौरोपरुद्धघनभव्यसार्थानाम्

सिद्धपुरपत्थियाणं रक्खट्ठायरिअवयणओ सेसा । अहिसेअवायणाचारियसाहुणो रक्खगा तेसिं ॥ ९९ ॥

सिद्धिपुरप्रस्थितानां रक्षार्थमाचार्यवचनतः शेषाः ॥ अभिषेकवाचनाचार्यसाधवो रक्षकास्तेषाम्

तातित्थयराणाए मये वि मे हुंति रक्खणिज्जाओ । इय मुणिय वीरवित्तं पडिवज्जिय सुगुरुसंनाहं ॥ १०० ॥

तत्तीर्थकराज्ञया मयापीमे भवन्ति रक्षणीयाः ॥ इति मत्वा वीरवृत्तिं प्रतिपद्य सुगुरुसंनाहम्

करिय क्खमाफलिअं धरिअ मक्खयं कयदुरुत्तसररक्खं । तिहुअणसिद्धं तंजं सिद्धंतमसिं समुक्खविय ॥१०१॥

कृत्वा क्षमाफलकं धृत्वा चाक्षतं कृतदुरुक्तशररक्षम् ॥ त्रिभुवनसिद्धं तयं सिद्धान्तमसिं समुत्क्षिप्य

निव्वाणवाणमणहं सगुणं सद्धम्ममविसमं विहिणा। परलोगसाहगं मुक्खकारगं धरियं विप्फुरियं ॥ १०२ ॥

निर्वाणवाणमनघं सगुणं सद्धर्ममविषमं विधिना ॥ परलोकसाधकं मोक्षकारकं धृत्वा विस्फुरितम्

जेण तओ पासत्थाइ तेणसेणा वि हक्किया सम्मं। सत्थेहिं महत्थेहिं विआरिऊणं च परिचत्ता ॥ १०३ ॥

येन ततः पार्श्वस्थादेः स्तेनसेनाऽपि हिक्किता सम्यग् ॥ शास्त्रकैर्महारथिभिर्विचार्य च परित्यक्ता ह्येव

आसन्नसिद्धिया भव्वसत्थिया सिवपहंमि संठाविया। निव्वुइमुवंति जह ते पडंति न भीमभवारण्णे ॥१०४॥

आसन्नसिद्धिका भव्यसार्थिकाः शिवपथे संस्थापिताः ॥ निर्वृत्तिमुपयान्ति यथा ते पतन्ति न भीमभवारण्ये

मुद्धाणाययणगया चुक्का मग्गाओ जायसंदेहा। बहुजणपिट्ठि विलग्गा दुहिणो हूया समाहूआ ॥ १०५ ॥

मुग्धा अनायतनगताः च्युता मार्गतो जातसंदेहाश्च ॥ बहुजनपृष्ठविलग्ना दुःखिनो भूताः समाहूताः

दंसियमाययणं तेसिं जत्थ विहिणा समं हवइ मेलो। गुरुपारतंतओ समयसुत्थओ जस्स निप्पत्ती ॥ १०६ ॥

दर्शितमायतनं तेषां यत्र विधिना समं भवति मेलः ॥ गुरुपारतंत्र्यतः समयसूत्रतो यस्य निष्पत्तिः

दीसइ य वीयराओ तिलोयनाओ विरायसहिएहिं। सेविज्जंतो संतो हरई तु संसारसंतावं ॥ १०७ ॥

दृश्यते च वीतरागस्त्रिलोकनाथो वैराग्यसहितैः ॥ सेव्यमानाः सन्तः हरन्ति तु संसारसंतापम्

वांइयमुपगीयं नट्टमपि सुयं दिट्ठं चिट्ठमुत्तिकरं । कीरइ सुसावएहिं सपरहियं समुचियं जुत्तं ॥ १०८ ॥

वादितमुपगीतं नाट्यमपि श्रुतं दृष्टं चेष्टमुक्तिकरम् ॥ क्रियते च सुश्रावकैः स्वपरहितं समुचितं युक्तम्

रागोरगो वि नासइ सोउं सुगुरुवदेसमंतपए । भव्वमणो सालुरं नासई दोसो वि जत्थाहि ॥ १०९ ॥

रागोरगोऽपि नश्यति श्रुत्वा सुगुरूपदेशमंत्रपदानि ॥ भव्यमनः शालूरं नाश्नाति दोषोऽपि यत्राहिः

नो जत्थुस्सुत्तजणक्कमो त्थि ण्हाणं बलिपइट्ठा य । जइजुवइपवेसो वि अ न विज्जए विज्जइविमुक्को ॥ ११० ॥

नो यत्रोत्सूत्रजनक्रमोऽस्ति स्नात्रं बलिप्रतिष्ठा च ॥ यतियुवतिप्रवेशोऽपि च न विद्यते विद्यतिविमुक्तः

जिणजत्ताण्हाणाई दोसाणं य क्खयाय कीरेति । दोसोदयमि कह तेसिं संभवो भवहरो होज्जा ॥ १११ ॥

जिनयात्रास्नानादयो दोषाणां यत् क्षयाय क्रियन्ते ॥ दोषोदये कथं तेषां संभवो भवहरो भवेत्

जा रत्ति जारत्थिणमिह रइं जणइ जिणवरगिहे वि । सा रयणी रयणिअरस्स हेउ कह नीरयाणं मया ११२

या रात्रिर्जारस्त्रीणामिह रतिं जनयति जिनवरगृहे ऽपि ॥ सा रजनी रजोनिकरस्य हेतुः कथं नीरजसां मता

साहु सयणासणभोअणाइं आसायणं च कुणमाणो । देवह रएण लिप्पइ देवहरे जमिह निवसंतो ॥ ११३ ॥

साधुः शयनासनभोजनादि माशातनां च कुर्वाणः ॥ देवस्यरजसा लिप्यते देवगृहे यदिह निवसन्ति

तंबोलो तं बोलइ जिणवसहिट्ठिएण जेण खद्धो । खद्धे भवदुक्खजले तरइ विणा नेअ सुगुरुतरिं ॥ ११४ ॥

तांम्बूलस्तं त्रोडयति जिनवसतिस्थितेन येन खादितम् ॥ खद्धे भवदुःखजले तरति विना नैव सुगुरुतरीम्

तेसिं सुविहिअजइणो य दंसिआ जे उ हुंति आययणं । सुगुरुजणपारतंतेण पाविया जेहिं णाणसिरी ॥ ११५ ॥

तेषां सुविहितयतयश्च दर्शिता ये तु भवंत्यायतनम् ॥ सुगुरुजनपारतंत्रेण प्राप्ता यैश्च ज्ञानश्रीः

संदेहकारितिमिरेण तरलिअं जेसिं दंसणं नेय । निव्वुइपहं पलोअंइ गुरुविज्जुवएसओसहओ ॥ ११६ ॥

संदेहकारितिमिरेण तरलितं येषां दर्शनं नैव ॥ निवृत्तिपथं प्रलोकयंति गुरुवैद्योपदेशौषधात्

निप्पच्चवायचरणा कज्जं साहंतिति जे उ मुत्तिकरं । मण्णंति कयं तं यं कयंतसिद्धं उ सपरहिअं ॥ ११७ ॥

निष्प्रत्यवाहचरणाः कार्यं साधयन्तीति ये तु मुक्तिकरम् ॥ मन्यन्ते कृतं यत्तत् कृतान्तसिद्धं तु स्वपरहितं च

पडिसोएण जे पवट्टा चत्ता अणुसोअगामिनीवट्टा । जणाजत्ताए मुक्का मयमच्छरमोहओ चुक्का ॥ ११८ ॥

प्रतिस्रोतसा ये प्रवृत्तास्त्यक्ता अनुस्रोतोगामिवर्त्म ॥ जनयात्रया च मुक्ता मदमत्सरमोहेभ्यश्च्युताः

सुद्धं सिद्धंतकहं कहंति बीहंति नो परेहिंतो । वयणं वयंति जत्तो निव्वुइ वयणं धुवं होइ ॥ ११९ ॥

सुद्धां सिद्धान्तकथां कथयन्ति बिभ्यति नो परेभ्यश्चैव ॥ वचनं वदन्ति यस्माद् निवृत्तिवचनं ध्रुवं भवति ॥

तव्विवरीआ अवरे जइवेसधरा वि हुंति न हु पुज्जा। तद्दंसणमवि मित्थत्तमणुक्खणं जणइ जीवाणं ॥ १२० ॥

तद्विपरीता अपरे यतिवेषधरा अपि भवन्ति न हु पूज्याः ॥ तद्दर्शनमपि मिथ्यात्वमनुक्षणं जनयति जीवानाम्

धम्मत्थीणं जेण विवेयरयणं विसेसओ ठ्ठाविअं। चित्तउडे चित्तउडे ठ्ठिआणं जं जणइ निव्वाणं ॥ १२१ ॥

धर्मार्थिनां येन विवेकरत्नं विशेषतः स्थापितम् ॥ चित्तपुटे चित्रकूटे स्थितानां यज्जनयति निर्वाणम्

असहाएणावि विहि य साहिओ जो न सेससूरीणं। लोअणपहे वि वच्चइ वुच्चइ पुण जिणमयण्णूहिं ॥१२२॥

असहायेनापि विधिश्च साधितो यो न शेषसूरीणाम् ॥ लोचनपथेऽपि वर्तत उच्यते पुनर्जिनमतज्ञैः ॥

घणजणपवाहसरिआणुसोअपरिवत्तसंकटे पडिओ। पडिसोएणाणीओ धवलेण व सुद्धधम्मभरो ॥ १२३ ॥

धनजनप्रवाहसरिदनुस्रोतःपरिवर्त्तशंकटे पतितः ॥ प्रतिस्रोतसा ऽऽनीतो धवलेनेव शुद्धधर्मभारः

कयवहुविज्जुज्जोओ विसुद्धलद्धोदओ सुमेहुव्व। सुगुरुच्छाइयदोसायरप्पहो प्पहयसंतावो ॥ १२४ ॥

कृतबहुविद्योद्द्योतो विशुद्धलब्धोदयः सुमेघ इव ॥ सुगुरुच्छादितदोषाकरप्रभः प्रहतसंतापः

सव्वत्थवि वित्थरिअ वुट्ठो कयसस्ससंपओ सम्मं। नेव वायहओ न चलो न गज्जिओ यो जए प्पयडो ॥ १२५

सर्वत्रापि विस्तृत्य वृष्टः कृतशस्यसंपत् सम्यग् ॥ नैव वादहतो न चलो न गर्जितो यो जगति प्रकटः

कहमुवमिजइ जलही तेण समं जो जडाणं कहवुड्ढी। तिहसेहिं पि परेहिं मुअइ सिरिं पि हु महिज्जंतो १२६

कथमुपमीयते जलधिस्तेन समं यो जडानां कृतवृद्धिः ॥ त्रिदशैरपि परेषां मुंचति श्रियमपि हु मन्थमानः

सूरेण व जेण समुग्गयेण संहरियमोहतिमिरेण। सद्दीट्ठीणं सम्मं पयडो निव्वुईपहोहूओ ॥ १२७ ॥

सूर्येणेव येन समुद्गतेन संहृतमोहतिमिरेण ॥ सद्दृष्टीनां सम्यक् प्रकटो निर्वृत्तिपथभूतः

वित्थरियममलपत्तं कमलं बहुकुमयकोसिया दुसिया। तेयस्सीणमपि तेओ विगओ विलयं गया दोसा॥१२८॥

विस्तृतममलपत्रं कमलं बहुकुमतकौशिका दूषिताः ॥ तेजस्विनामपि तेजो विगतं विलयं गता दोषाः

विमलगुणचक्कवाया वि सव्वहा विहाटिया वि संघहिया। भमरेहिं पि भमरेहिं पि पावओ सुमणसंजोगो १२९

विमलगुणचक्रवाका अपि सर्वथा विघटिता अपि संघटिताः ॥ भ्रमणैरपि भ्रमरैरपि प्राप्तः सुमनःसंयोगः

भव्वजणेण जग्गिय मवग्गियं दुट्ठसावयगणेण। जड्डुमवि खंडियं मंडियं य महिमंडलं सयलं ॥ १३० ॥

भव्यजनेन जागरितमवग्रहीतं दुष्टश्रावकगणेन ॥ जाड्यमपि खण्डितं मण्डितं च महीमण्डलं सकलम्

अत्थमई सकलंको सया ससंको वि दंसियपओसो। दोसोदये पत्तपहो तेण समं सो कहं हुज्जा ॥ १३१ ॥

अस्तमितः सकलङ्कः सदा शशाङ्कोऽपि दर्शितप्रदोषः ॥ दोषोदये प्राप्तप्रभस्तेन समः स कथं भवेत्

संजणियविही संपत्तगुरुसिरी जो सया विसेसपयं । विण्णुव्व किवाणकरो सुरपणओ धम्मचक्कधरो ॥ १३२ ॥

संजनितविधिः संप्राप्तगुरुश्री यः सदा विशेषपदः ॥ विष्णुरिव कृपाङ्ककरः सुरप्रणतो धर्मचक्रधरः

दंसियवयणविसेसो परमप्पाणं य मुणइ जो सम्मं । पयडिविवेओ छच्चरणसम्मओ चउमुहुव्व जए ॥ १३३ ॥

दर्शितवचनविशेषः परमात्मानं च मन्यते यः सम्यग् ॥ प्रकटविवेकः षड्चरणसंमतश्चतुर्मुख इव जगति

धरइ न कवड्डयं पि कुणइ न बंधं जडाणमवि कयाइ । दोसायरं य चक्कं सिरंमि न चडावए कयापि ॥ १३४ ॥

धरते न कपर्दकमपि करोति न बन्धं जडानामपि कदाचित् ॥ दोषाकरश्च चक्रं शिरसि नो चाटयति कदापि

संहरइ न जो सत्तो गोरीए अप्पए नो नियमंगं । सो कह तव्विवरीएण संभुणा सह लहिज्जु पमा ॥ १३५ ॥

संहरति यो न सत्वान् गौर्या अर्पयति नो निजमङ्गमपि ॥ स कथं तद्विपरीतेन शंभुना सह लभेतोपमाम्

साइसएसु सग्गं गयेसु जुगप्पवरसूरिनिअरेसु । सव्वाओ विज्जांगाओ भुवणं भमिऊण स्संताउ ॥ १३६ ॥

सातिशयेषु स्वर्गं गतेषु युगप्रवरसूरिनिकरेषु ॥ सर्वा विद्याङ्गना हि भुवनं भ्रमयित्वा श्रान्तास्तु

तह वि न पत्तं पत्तं जुगवं जव्वयणपंकए वासं । करिय परुप्परमच्चंतपणयओ हुंति सुहिआओ ॥ १३७ ॥

तथापि न प्राप्तं पात्रं युगपद् यद्वदनपंकजे वासम् ॥ कृत्वा परस्परमत्यन्तप्रणयात् भवन्ति सुखिन्यः

अण्णुण्णविरहविहुरोहतत्तगत्ताओ ताओ तणाइओ। जायाओ पुण्णवसा वासपयं पि जो पत्ता ॥ १३८ ॥

अन्योन्यविरहविधुरौघतप्तगात्रास्तास्तःन्व्यश्चैव ॥ जाताः पुण्यवशात् स्वावासपदमपि याः प्राप्ताः

तं लहिअ विअसिआओ ताओ तव्वयणसंररुहगयाओ। तुट्ठाओ पुट्ठाओ समगं जायाओ जिट्ठाओ ॥ १३९ ॥

तं लब्ध्वा विकसितास्तास्तु तद्वदनसरोरुहगताः ॥ तुष्टाश्चैव पुष्टाश्च समकं जाता ज्येष्ठा अपि

जाया कइणो के के न सुमइणो परमिहोवमं ते वि। पावंति न जेण समं समंतओ सव्वकव्वेण णिउं ॥ १४० ॥

जाता कवयः के के न सुमतयः परमिहोपमां तेऽपि ॥ प्राप्नुवन्ति न येन समं समन्ततः सर्वकाव्येन नेतुम्

उवमिज्जंते सन्तो संतोसमुवविंति जंमि नो सम्मं। असमाणगुणो जो होइ कहणु सो पावए उवमं ॥ १४१ ॥

उपमीयमाने सन्तः संतोषमुपयान्ति यस्मिन्नो सम्यग् ॥ असमानगुणो यो भवति कथं नु'स' प्राप्नोत्युपमाम्

जलहिजलमंजलीहिं जो मिणइ नहंगणं वि हु पएहिं। परिसकइ सो वि न सकइत्ति जा गुणगणं भणिउं १४२

जलधिजलमंजलिभिर्यो मिनोति नभोङ्गनमपि हु पादैः ॥ परिष्वष्कते सोऽपि न शक्नोतीति यद्गुणगणं भणितुम्

जुगपवरगुरुजिणेसरसीसाणं अभयदेवसूरीणं। तित्थभरधरणधवलाणमंतिए जिणमयं विमयं ॥ १४३ ॥

युगप्रवरगुरुजिनेश्वरशिष्याणाम भयदेवसूरीणाम् ॥ तीर्थभारधरणधौरेयाणामन्तके जिनमतं विमतम्

सविणयमिह जेण सुअं सप्पणय तेहिं जस्स परिकहियं । कहियाणुसारओ सव्वमुवगय सुमइणा सम्मं १४४

सविनयमिह येन श्रुतं सप्रणयं तैर्यस्य परिकथितम् ॥ कथितानुसारतः सर्वमुपगतं सुमतिना सम्यग्

निच्छम्मं भव्वाणं तं पुरओ पयडियं पयत्तेण । अकयसुकयंगिदुल्लहजिणवल्लहसूरिण जेण ॥ १४५ ॥

निच्छद्मं भव्यानां पुरतस्तत् प्रकटितं प्रयत्नेन ॥ अकृतसुकृताङ्गिदुर्लभजिनवल्लभसूरिणा येन

सो मह सुहविहिसद्धम्मदायगो तित्थनायगो अ गुरू । तप्पयपउमं पाविअ जाओ जायाणुजाओहं ॥ १४६ ॥

स मम शुभविधिसद्धर्मदायकस्तीर्थनायकश्च गुरुः ॥ तत्पादपद्मं प्राप्य जातो जातानुजातोऽहम्

तमणुदिणं दिण्णगुणं वंदे जिणवल्लहं पहु प्पयओ । सूरिजिणेसरसीसो अ वायगो धम्मदेवो जो ॥ १४७ ॥

तमनुदिनं दत्तगुणं वन्दे जिनवल्लभं प्रभुं प्रयतः ॥ सूरिजिनेश्वरशिष्यश्च वाचको धर्मदेवो यः

सूरी असोगचंदो हरिसीहो सव्वदेवगणिप्पवरो । सव्वे वि तव्विणेया तेसिं सव्वेसिं सीसोहं ॥ १४८ ॥

सूरिरशोकचन्द्रो हरिसिंहः सर्वदेवगणिप्रवराः ॥ सर्वेऽपि तद्विनेयास्तेषां सर्वेषां शिष्योऽहम्

ते मह सव्वे परमोवयारिणो वंदणारिहा गुरुणो । कयसिवसुहसंपाता तेसिं पाए सया वंदे ॥ १४९ ॥

ते मम सर्वे परमोपकारिणो वन्दनार्हा गुरवः ॥ कृतशिवशुभसंपातास्तेषां पादान् सदा वन्दे
जिणदत्तगणिगुणसयं सपण्णयं सोमचंद्दविंबंव । भव्वेहिं भणिज्जंतं भवरविसंतावमवहरउ ॥ १५० ॥
जिनदत्तगणिगुणशतं सपंचाशतं सोमचंद्रविम्बमिव ॥ भव्यैर्भण्यमानं हि भवरविसंतापमपहरतु

समाप्तमिदं प्रकरणम् । शुभम् ।

# अथ गणधरसार्धशतकस्यशुद्धिपत्रम् ।

| पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् | पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २ | २ | हितंसपत्ति | हितसंपत्ति | ९ | २७ | चरित्रे | चरित्ते |
| २ | ३ | धरणेद्रः | धरणीन्द्रः | १० | ३ | भोग्यं | योग्यं |
| २ | २० | क्षयकृतो | क्षयकृता | १० | ४ | भोग्यं | योग्यं |
| ३ | १ | ज्ञेयः | ज्ञेयो | १० | १६ | भास्करणे | भास्करेण |
| ३ | ३ | ब्राह्मण | ब्राह्मणा | १० | २१ | पूर्वजवन | पूर्वजवन |
| ३ | २४ | दत्वा | दत्त्वा | १० | २७ | निशल्पिता | निशल्यिता |
| ४ | १ | प्रेक्षते | प्रेक्षन्ते | ११ | ७ | नीचै | नीचै |
| ७ | २३ | ततथा | तथा | ११ | २७ | नानाढौकनि | नानाढौगनि |
| ९ | २७ | वुट्टी | वुड्ढी | १२ | ७ | बर्द्ध | वर्द्ध |

| पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् | पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १२ | १९ | पुस्तक | पुस्तकम् | २४ | ९ | देवोपाध्यानां | देवोपाध्यायानां |
| १२ | २७ | महिड्डियो | महिड्डीयो | २४ | १३ | प्रदता | प्रदत्ता |
| १३ | १० | पदबीज | पदवी | २६ | १२ | कुर्मो | कुर्म |
| १३ | २५ | हास्यन्ति | दास्यन्ति | २६ | १३ | संग | संगः |
| १५ | २ | प्रज्ञाधनाः | प्रज्ञाधनः | २६ | १७ | रुशउ | रुसउ |
| १५ | १५ | ततदाकर्ण्य | तदाकर्ण्य | ३० | २१ | सम्मर्पितः | समर्पितः |
| १५ | २२ | भक्तिमार्नवो | भक्तिर्मानवो | ३१ | ३ | उसभसेन | उसभसेण |
| १६ | [illegible] | ग्रामान्तेर | ग्रामान्तरे | ३१ | १३ | जिणवद्धमानमुनि | जिणवद्धमाणमुणि |
| [illegible] | ७ | स्तोकनैव | स्तोकेनैव | ३१ | १ | सौपायमि | सोपायंमि |
| [illegible] | ११ | गमनायमुत्कल | गमनायोत्कल | ३४ | २३ | क्खमासमणं | खमासमणं |
| [illegible] | [illegible] | दत्वा | दत्त्वा | ३५ | २४ | प्रकाशयन्तम् | प्रभासयन्तम् |
| १९ | १४ | सिद्धान्तरस्या | सिद्धान्तरहस्या | ३७ | ७ | शिवपुर | सिवपुर |
| २० | १९ | दत्वोपविष्ठौ | दत्त्वोपविष्ठौ | ३७ | १३ | उवझ्झा | उवज्झा |
| २१ | २२ | तर्जितो | गर्जितो | ४१ | १ | मित्थत्त | मिच्छत्त |